वक्त्रे तालुनि हृत्क् स्तुत्यो: चतुर्ष्वेकैकमेव च।
भ्रुवोर्मध्ये तथैकन्तु ललाटे चैकमेव हि॥
याम्यपश्चिमसौम्येषु एकैक मेकमूर्द्धनि।
गायत्रीन्यस्तसर्वाङ्गो गायत्री विप्र उच्यते॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसि।
य: प्रोक्तोऽक्षरविन्यासो व्याहृतीनामथोच्यते॥
सप्तापि व्याहृतीर्न्यस्य भवेद्‌भर्गो जपादिषु।
भूर्लोकं पादयोर्न्यस्य भुवर्लोकन्तु जानुनो:॥
स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा।
जनलोकन्तु हृदये कण्ठदेशे तपस्तथा॥
भुवोर्ललाटसन्ध्योश्च सत्यलोक: प्रतिष्ठित:।
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्॥
तच्छुभं ज्योतिषां ज्योति स्तद्यदात्मविदो विदु:।
देवस्य सवितुर्भर्गो वरणीयञ्च धीमहि।
तदस्माकन्धियो यस्तु ब्रह्मत्वे च प्रचोदयात्॥
छन्दोदैवतपर्णाञ्च विनियोगञ्च ब्राह्मणाम्।
मन्त्रं पञ्चविधं ज्ञात्वा द्विज: कर्म समाचरेत्॥
स्वरतो वर्णतश्चैव परिपूर्णं भवेद्यथा॥
हीनं न विनियुञ्जीत मन्त्रन्तु मात्रयापि च।
देवतायतने कुर्य्याज्जपं नद्यादिकेषु च॥
आणमेषु यतीनाञ्च गोष्ठे वा स्वगृहेऽपि वा।
चतुर्षु मतिपूर्वेषु ह्येनमादि क्रमेण तु॥
दशगुणं सहस्रं स्यात् फलं निष्काममन्त्रकम्।

असमीपि जलं कुर्य्यात् ससङ्ख्यं तद्भवेद्यथा ॥
असङ्ख्य मासुरं यस्मात्तस्मात्तद्गणयेद् ध्रुवम्।
स्फाटिकै द्रीक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः ॥
अक्षमाला प्रकर्त्तव्या प्रशस्ता ह्युत्तरोत्तरा।
अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिना ॥
यथा कथञ्चिद्गणयेत्ससङ्ख्यं तद्भवेद्यथा।
प्रणवो भूर्भुवः स्वश्च पुनः प्रणवसंयुतम् ॥
अत्योङ्कारसमायुक्तां मन्यन्ते कवयोऽपरे।
प्रणवान्ते तथाचादौ आङ्करन्ये जपे क्रमम् ॥
आदौ चैवतु चोङ्कार आष्टत्तादिक्रमोऽन्ततः।
तदाद्यञ्च तदन्तञ्च कुर्य्यात्प्रणवसम्पुटम् ॥
आद्यन्तरचितं कुर्य्यात् इति पाराशरोऽब्रवीत्।
अक्षर प्रतिलोपेन सोङ्कारेण क्रमेणतु।
पुट्कारान्ताञ्च कुर्वीत प्रच्छन्नरिवधं बुधः ॥
होमेऽपि च जपं कुर्य्यात् प्रणवावर्जनं द्विजः।
अभिप्रेतार्थहेमादौ स्वाहान्तन्त मुदीरयेत् ॥
सङ्कीर्णतां यदा पश्येद्रागाद्वा द्विषतोऽपि वा।
तदा जपेच्च गायत्रीं सर्वदोषापनुत्तये।
रुद्रजाप्यानि कार्य्याणि सूक्तञ्च पुरुषस्य च।
शिवसङ्कल्पजल्पञ्च सर्वं कुर्य्याद्विधानतः ॥
घ्नन्ति जप्तानि पापानि श्रेयोदद्युस्तदर्थिनः।
अतो जपं सदा कुर्य्याद्यदिच्छे च्छुभमात्मनः ॥
द्रुपदां वा जपेद्देवी मजपाञ्चम्बुकान्तथा।

प्रणवञ्च सदाभ्यस्येद्याति ब्रह्मत्वमिच्छति ॥
प्रणवानामयुताभ्यां तथा षोड़शभिः शतैः ।
पुंसाङ्गच्छत्यहोरात्रं तत्सङ्ख्यामजपां विदुः ॥
रविमण्डलमध्यस्थे पुरुषे लोकसाक्षिणि ।
समर्पितमयाचेदं सूर्याख्ये ब्रह्मणः पदे॥
न जपं प्रसभं कुर्यात् प्रसभं घ्नन्ति राक्षसाः ।
ब्राह्मणा भागधेयस्तु तेषाञ्चैवावधीकृताः ॥
उपांशुन्तु जपं कुर्यात् काय्यं चैव तु मानसम्।
निवृत्तोष्ठमुपांशु स्यादचलोष्ठं तु मानसम् ॥
द्विविधन्तु जपं कुर्यादुपांशु मानसन्तथा ।
उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥
उपांशुजपयज्ञस्य मानसे च रतस्य च ।
दूरैव याति वेधस्त्वमिति पाराशरोऽब्रवीत् ॥
विधियज्ञाः पाकयज्ञा ये चान्ये बहवो मखाः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥
जपेनैकेन सिद्धेन किल सिद्धं भवेदिह।
कुर्य्यादन्यं न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥
शतेन जन्मजनितं सहस्रेण पुराकृतम् ।
अयुतेन त्रिजन्मोत्थं गायत्री हन्ति पातकम् ॥
दशभिर्जन्मजनितं शतेन तु पुराकृतम् ॥
सहस्रेण त्रिजन्मोत्थं गायत्री हन्ति पातकम् ।
अस्मिन् कलियुगे विद्वान्विधिवत्कर्म यत् कृतम् ॥
भवेद्दशगुणं तद्धि कृताद्यैर्युगतो भुवम् ।

न च तच्छक्यते कर्तुं मात्राम्नायस्य भूषणात् ॥
अयथार्थकृतात्पाठान्मन्त्रसिद्धिर्गरीयसी ।
नच मन्त्रोपहसनं स्वपार्श्वमवलोकयेत् ॥
नान्यसक्तो न तमस्थो न चैवार्द्रशिरास्तथा ।
नाद्रीणां पादमाक्रम्य न चैवहि तथाकरौ ॥
नैवम्विधं जपङ्कुर्य्यान्नच सञ्चालयेत्करौ ।
अच्छन्नानि च दानानि ज्ञानञ्चानिरहङ्कृतम् ॥
जपानि च सुगुप्तानि तेषां फलमनन्तकम् ।
य एवमभ्यसेन्नित्यं ब्राह्मणः संयतेन्द्रियः ॥
स ब्रह्मलोकमाप्नोति तथा ध्यानार्चनादपि ।
अथान्यत्सम्प्रवक्ष्यामि विशेषन्तु पितामहे ॥
लब्धवान्वेधसः पृष्टाद्गायत्रीध्यानमुत्तमम् ।
तदक्षरे तु यद्वर्णं यत्र यत्र च यः स्मरेत् ॥
यत्फलं लभते कृत्वा यथा तस्याः समर्चनम् ।
तत्प्रकृतिं स च स्वान्तम्विकारो बुद्धिरेव च ॥
तुरीत्येतदहङ्कारं वशब्दं विद्धिपापहम् ।
रे स्पर्शन्तु णिरूपं च यं रसङ्गन्धमात्रकम् ॥
गौः श्रोत्रन्त्वचञ्चक्षुः सकार रसना तथा ।
यो नासाच तथा वाग्मी हि हस्तौ च द्विपादूद्वयम् ॥
य उपस्थन्तु दं योन्यो नवं प्राकारमारुतम् ।
चो तेजोदलजं यद्भा गायत्रयास्तत्वचिन्तनम् ॥
चतुर्विंशतितत्वानाम्प्रत्येकमक्षरेषु यः ।
गायत्रीं संस्मरेद्द्योगान् स याति ब्रह्मणः पदम् ॥

लकारं पादयोर्न्यस्य ब्रह्मविष्णुशिवाकृतिम् ।
शान्तम्पद्मासनारूढन्ध्यानाद्धरति किल्बिषम् ॥
सकारं पादयोर्न्यस्वा अतसीपुष्पसन्निभम् ।
पद्ममध्यस्थितं सौम्यन्तद्धरेचोपपातकम् ॥
विकार जङ्घयोर्द्वासिन्ध्यायेदेतद्विचक्षणः ।
ब्रह्महत्याकृतं पापं हन्यात्तद्धि स्मृतः क्षणात् ॥
उकारं जानुदेशे तु इन्द्रनीलसमप्रभम् ।
निर्द्दहेत् सर्व्वपापानि ग्रहरोग मुपद्रवम् ॥
ऊर्वोर्विविमलन्ध्यायेत् शुद्धस्फटिकविद्युतिम् ।
विज्ञातं हन्ति तत्पापमगम्यागमनं कृतम् ॥
देकारं वृषणे प्रोक्तं विद्युत्स्फुरिततेजसम् ।
मित्रद्रोहकृतं पापं स्मरणादेव नाशयेत् ॥
णिगुह्ये श्वेतवर्णन्तु जातिपुष्पसमद्युतिम् ।
गुरुहत्याकृतं पापं शोधयेद्ध्यानचिन्तनात् ॥
यङ्कर्ष्यां तारका वर्णाश्चन्द्र वधिष्णु भूषितम् ।
गोहत्याविहितं पापं गोकारस्य विशोधयेत् ।
श्यामं रक्तञ्च देकारन्ध्यानकृद्धेशमाश्रयेत् ।
हृदि कुन्देन्दुवर्णाभव्वकार ममृतं स्रवेत् ॥
गुरुहत्याकृतं पापं वकारेण प्रणश्यति ।
स्यकारं विन्यसेत्कण्ठेत्वोष्ठं स्फटिक सन्निभम् ॥
मनसोपार्जितं पापं स्य कारेण प्रणश्यति ।
धिकारं वसुदैवत्यं वदनं स्वर्णसन्निभम् ॥
प्रतिग्रहकृत पापन्तत्क्षणादेव नश्यति ।

मकारं पद्मरागाभं शिरस्थं दीप्ततेजसम् ॥
पूर्वजन्मकृतं पापं मकारेण प्रणश्यति।
ह्रिकारं नासिकाग्रेतु पूर्णचन्द्रसमप्रभम् ॥
पूर्वात्परतरं पापं स्मरणादेव नश्यति।
धीकारं त माङ्गिरसन्नेत्रयोर्विन्यसेद्बुधः ॥
मनोवाक्कायिकं पापं चिन्तनादेव नश्यति।
योकारं रक्तवर्णाभ मिन्द्रनीलसमप्रभम् ॥
प्राणिहत्याकृतं पापं योकारेण विनश्यति।
द्वितीयं तु तथा प्रोक्तं योकारं रुक्मसन्निभम् ॥
निर्दहेद्दुष्टपापानि अपेयामेयकानि च।
नकारे सुमुखे पूर्व मादित्योदयसन्निभम् ॥
सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेदैन्द्रवं पदम्।
नीलोत्पलदलश्यामं प्रकारं दक्षिणामुखे ॥
सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेच्छैशवं पदम्।
सौम्यङ्गोरोचनापीतं चोकारम्पश्चिमामुखम् ॥
सकृद्ध्यात्वा द्विजश्रेष्ठः सगच्छेद्ब्रह्मणः पदम्।
शङ्खकुन्देन्दुधवलन्दकारञ्चोत्तरामुखम् ॥
सकृद्ध्यात्वा द्विजश्रेष्ठः स गच्छेद्ब्रह्म शाश्वतम्।
यकारस्तु शिरः प्रोक्तश्चतुर्वदनसंयुतम् ॥
याकारं सगुणं प्रोक्तश्चतुर्विंशति संस्मृतम्।
यं यं पश्यति चक्षुर्भ्यां यं यं स्पृशति पाणिना ॥
यं यं च भाषते चित्ते तत्सर्वं पूतमेवच।
जाप्येतु त्रिपदा ज्ञेया ब्राह्मणैस्तत्त्वचिन्तकैः

जम्बुका नाम सा देवी यजुर्वेदप्रतिष्ठिता।
अन्तर्जले त्रिरावर्त्य मुच्यते ब्रह्महत्यया॥
सा देवी द्रुपदा नाम वेदे वाजसनेयके।
सोपनीय समस्तानि महतां स द्विजोत्तमः॥
ब्रह्मणः पदमाप्नोति यद्गत्वा न निवर्त्तते।
प्रमादेन कथञ्चिद्वा जपं कुर्वन् भवेष्वपि॥
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः।
तद्विष्णोरिति मन्त्रोऽयं स्मर्त्तव्यः सर्व्वकर्म्मसु॥
आवर्त्य प्रणवो वापि सर्व्वस्यादियतोऽहि सः।
अभ्यसेत्प्रणवान्नित्य मेकचित्तसमाहतः॥
गायत्री च तथा देवी वैदिकन्तु जपं ह्रियत्।
पौराणं पाञ्चरात्रञ्च योऽभ्यसेन्मुक्ति माप्नुयात्॥
यावेद स्तानि वै तानि यान्येतानि च सा स्मृतिः।
जपेनयेनेहकृतेन पुंसो ददाति मार्गं सवितापि कर्तु।
अयंहि सर्व्वेष्टकृतास्वरिष्ठोविधेः पदं यास्यति निर्विकल्पः॥
यदुक्तं धर्म्मशास्त्रेषु तथा सर्वश्रुतिष्वपि।
उपनिषत्तमन्तद्वत् विप्रहितं प्रकीर्त्तितम्॥
न्यासन्तनुत्रन्नच बन्धदेहे
जग्राह वोङ्कारमयीसुतीक्ष्णम्।
विप्रस्य वश्यान्त्रिपदान्न लोके
मतः स दुष्टः कुनखस्य कुर्यात्॥

इति श्रीबृहत्पाराशरीये जपनिर्णयः॥

---

देवार्चनं प्रवक्ष्यामि यदुक्तमृषिभिः पुरा ॥
वैदिकैरेव तन्मन्त्रैर्यस्य एतस्य तैरिति।
अर्चयेद्वैदिकैर्मन्त्रैर्नानुग्राह्यमुपेक्षते ॥
वैदिकोऽनुग्रहस्तस्य वेदस्विीकरणेन तु।
ब्रह्माणं वैधसैर्मन्त्रै र्विष्णुं स्वैः शङ्करं स्वकैः ॥
अन्यानपि तथा देवानर्चयेत्स्वीयमन्त्रकैः।
मन्त्रन्यासम्पुरा कृत्वा स्वदेहे देवतासु च ॥
गायत्र्योङ्कारन्यस्ताङ्गः पूजयेद्विष्णुमव्ययम्।
न्यस्त्वा तु व्याहृतीः सर्वाः प्रोक्तस्थानक्रमेण तु ॥
ब्रह्मीभूतः शुचिः शान्तो देवयागमुपक्रमेत्।
विष्णुरादिरयं देवः सर्वामरगणार्चितः ॥
नामग्रहणमात्रेण पापयोगान्निहन्ति यः।
तदर्चनं प्रवक्ष्यामि विष्णोरमिततेजसः ॥
यद्ज्ञात्वा मुनयः सर्वे विष्णोः सायुज्यमाप्नुयुः।
षट्स्वेषु हरेस्सम्यगर्चनं मुनिभिः कृतम् ॥
अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च।
अग्नौ क्रियावतां तेषां दिवि देवमनीषिणाम् ॥
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिम्।
आपो ह्यायतनन्तस्य तस्मात्तासु सदा हरिः ॥
सर्वगत्वेन विष्णोस्तु स्थण्डिले भावितात्मनाम्।
दद्यात्पुरुषसूक्तेन आपः पुष्पाणि चैव हि ॥
अर्चितं स्यादिदन्तेन नित्यम्भुवनसप्तकम्।
अनुष्टुभस्य सूक्तस्य त्रिभन्तस्य च दैवतम् ॥

पुरुषो यो जगद्बीज मृषिर्नारायणः स्मृतः ।
अस्य सूक्तस्य सर्वस्य ऋचा न्यासं यथाक्रमम् ॥
देवे आत्मनि च तथा सम्प्रवक्ष्याम्यतः परम् ।
हस्तन्यासम्पुरा कृत्वा स्मृत्वा विष्णुन्तथाव्ययम् ॥
शिखाबन्धञ्च दिग्बन्धं सोऽर्चयेद्विष्णुमात्मनि ।
प्रथमाम्विन्यसेद्वामे द्वितीयां दक्षिणे करे ॥
तृतीया वामपादे तु चतुर्थीं दक्षिणे न्यसेत् ।
पञ्चमीं वामजानौ तु षष्ठीं च दक्षिणे न्यसेत् ॥
सप्तमीं वामकक्षाञ्च दक्षिणायान्तथाष्टमीम् ।
नवमीं नाभिमध्येतु दशमीं हृदि विन्यसेत् ॥
एकादशीं वामपार्श्वे द्वादशीं दक्षिणे न्यसेत् ।
कण्ठे त्रयोदशीं न्यस्या तथा वक्त्रे चतुर्दशीम् ॥
अक्ष्णोः पञ्चदशीं न्यस्या षोडशीं मूर्द्ध्नि विन्यसेत् ।
एव न्यासविधिं कृत्वा पश्चात् यागं समाचरेत् ॥
आसने चिन्तयेन्मेरु मष्टदलं सकर्णिकम् ।
व्याहृतीना मथ न्यासं कुर्य्यात्तद्विधिवद्द्विजः ॥
भूर्लोकं पादयोर्न्यस्या भुवर्लोकन्तु जानुनोः ।
स्वर्लोकं कटिदेशेतु नाभिदेशे महस्तथा ॥
जनोलोकन्तु हृदये कण्ठदेशे कटीस्तथा ।
भ्रुवोर्ललाटसन्ध्योस्तु सत्यलोकः प्रतिष्ठितः ॥
हिरण्मये परे कोशे विरज ब्रह्म निष्कलम् ।
तच्छुभ्रज्योतिषां ज्योतिस्तत्सदात्मविदो विदुः ॥
आवाहन मथ प्राङ्क विष्णोरमिततेजसः ।

यदर्चाकृतये तस्य स्वदेहे चिन्तयेद् यया ॥
आद्य मावाहयेद् देवञ्चाच पुरुषोत्तमम्।
यथादेशे तथा देहे न्यासं कृत्वा विधानतः॥
द्वितीययासनन्दद्याद्द्द्यात्पाद्यं तृतीयया।
चतुर्थ्यार्घ्यः प्रदातव्यः पञ्चम्याचमनन्तया॥
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रधौतकम्।
यज्ञोपवीतं चाष्टम्या नवम्या गन्ध मेव च॥
पुष्पन्देयं दशम्यातु एकादश्याच धूपकम्।
द्वादश्या दीपकन्दद्यात् त्रयोदश्या निवेदनम्॥
चतुर्दश्याञ्जलिं कुर्यात्पञ्चदश्या प्रदक्षिणाम्।
षोड़श्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत्॥
स्नाने वस्त्रे निवेद्येच दद्यादाचमनं हरेः।
षण्मासात्सिद्धिमाप्नोति एवमेवहि योजयेत्॥
आदित्यमण्डले देवन्ध्यात्वा विष्णुमुपैति यः।
स याति ब्रह्मणः स्थानं नात्र कार्या विचारणा॥
ध्येयो दिनेश परिमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः॥
केयूरवान्मकरकुण्डलवान् किरीटि-
हारी हरि र्मुनिजनैर्धृतशङ्खचक्रः॥
सूक्तेन विष्णुविधिना समुदीरितेन
योगेन नित्यमजमादिमनन्तमूर्त्तिम्।
भक्त्यार्चयेत्पठति यश्च स विष्णुदेहम्
विप्रो विशेद्रविवरेण कृतार्थदेहः॥

पञ्चरात्रविधानेन स्थण्डिले वापि पूजयेत् ।
जलमध्यगतो वापि पूजयेज्जलमध्यतः ॥
द्वादशाराचर्नव्यूहपञ्चतत्वक्रमेण तु ।
अभावे धौतपत्रस्य पत्रिकायास्तथा द्विजः ॥
जलेऽपि हि जलेनैव मन्त्रैरेवार्चयेद्धरिम् ।
विष्णुर्विष्णुरित्यजस्रन्तु चिन्तयेद्धरिमेव तु ॥
तिष्ठन्व्रजंस्तथासीनः शयानोऽपि हरिं सदा ।
संस्मरन्नाशुभं पश्येदिहामुत्र च वै द्विजः ॥
रुद्रं रुद्रविधानेन ब्रह्माणञ्च विधानतः ।
सूर्यं सहितमन्त्रैश्च तदीरितविधानतः ॥
दुर्गां कात्यायनीं चैव तथा वाग्देवतामपि ।
स्कन्दं विनायकञ्चैव योगिनीं क्षेत्रपालकान् ॥
विधानेनार्चयेत्सर्वान्यो विप्रो भक्तितत्परः ।
विष्णुना सुप्रसन्नेन विष्णुलोकमवाप्नुयात् ॥
ग्रहांश्च पूजयेद्विद्वान् ब्राह्मणः शान्तितत्परः ।
आरोग्यपुष्टिसंयुक्तो दीर्घमायुष्यमाप्नुयात् ॥
ग्रहा गावो नृपा विप्राः सद्भिः पूज्याः सदा द्विजैः ।
पूजिताः पूजयन्त्येते दहन्ति चापमानिताः ॥
यो हितः सर्वसत्वेषु गोनृपब्राह्मणेषु च ।
इहामुत्र स पूज्योऽसौ विष्णुलोकमवाप्नुयात् ॥
उक्तो गृहस्थस्य सुरार्चनस्य
धन्यो विधिर्विष्णुजनस्य लब्धैः ।
कार्यो द्विजातिः प्रतिवासरं यो

वेदोक्तमन्त्रैः समये हिताय ॥
देवपूजाविधिः प्रोक्त एष उद्देशतो मया ।
वैश्वदेवस्य वक्तव्यो विधिर्विप्र ! मयाधुना ॥
इति वृहत्पाराशरीये धर्मशास्त्रे देवपूजाविधिः समाप्तः ॥



वैश्वदेवं प्रवक्ष्यामि यथाकार्यं द्विजातिभिः ।
स्वगृह्योक्तविधानेन जुहुयाद्वैश्वदैवकम् ॥
हविष्यस्य द्विजोभावे यथालाभस्रुतं हविः ।
जुहुयाद्विधिवद्भक्त्या यथा स्याच्चित्तनिर्वृतिः ॥
यद्वा तदापि होतव्य मग्नौ किञ्चिद्द्विजातिभिः ।
फलम्वा यदिवा मूलं घासम्वा यदिवा पयः ॥
अहुत्वा च द्विजोऽश्नीयाद्यत्किञ्चित् स्वयमश्नुते ।
अश्नीयाच्चेदहुत्वापि नरकं स समाविशेत् ॥
जुहुयादन्नमच्चारवर्ज्जमन्नं हुताशने ।
अनुज्ञातो द्विजैस्तैस्तु त्रिः कृत्वा पुरुषर्षभः ॥
यदाग्नौ हूयते नैव यस्य ग्रासो न दीयते ।
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणञ्चरेत् ॥
लौकिके वैदिके नैव वैश्वदेवो हि नित्यशः ।
लौकिके पापनाशाय वैदिके स्वर्गमाप्नुयात् ।
अभावादग्निहोत्रस्य आवसथ्य वा तथा ।
अस्मिन्नग्नौ पचेदन्नं तत्र होमो विधीयते ॥

अग्निः सोमः समस्तौ तौ विश्वदेवास्तथैव च।
धन्वन्तरीः कुहूस्तद्वदनुमातः प्रजापतिः॥
द्यावाभूम्योः स्विष्टिकृञ्च हुत्वा तेभ्यः पुनः पुनः॥
कुर्य्याद्बलिकृतं पश्चात्सर्वदिक्षु प्रदक्षिणम्।
सूत्राग्नैस्तस्य पुंभ्यश्च यमाय च सहानुगैः॥
मरुद्भ्यश्च क्षिपेद्द्वारि अप्सरोभ्यस्तथा हरेः।
वनस्पतिभ्यः सर्वेभ्यो मुसलोलूखले हरेत्॥
श्रियै च भद्रकाल्यै च उष्णीषपादयोः क्रमात्।
ब्रह्मणे सानुगायेति मध्ये चैव हरेद्बलिम्॥
वास्तवे सानुगायेति वास्तुमध्ये बलिं हरेत्।
विश्वेभ्यश्चैव देवेभ्यो बलिमाकाशमुत्क्षिपेत्॥
द्युचरेभ्यश्च भूतेभ्यो नक्तञ्चारिभ्य एव च।
वास्तुपृष्टे च कुर्वीत बलिं सर्वान्न भूतयेत्॥
पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत्।
पतितेभ्यः श्वपाकेभ्यः पापानां पापरोगिणाम्॥
कृमिकीटपतङ्गानां सर्वेभ्योऽपि बलिं हरेत्।
एवं सर्वाणि भूतानि यो विप्रो नित्यमर्चयेत्॥
तत्स्थानं परमाप्नोति यज्ज्योतिः परवेधसः।
गृह्योऽग्नौ वैश्वदेवन्तु प्रोक्तमेतन्मनीषिभिः॥
अनग्निकस्तु कुर्वीत वैश्वदेवं कथं त्विति।
महाव्याहृतिभिस्तिस्रः समस्ताभिस्तथा परा॥
हुत्वाहुतीश्चतस्रस्तु तथा वेदकृतोऽपि च।
त्रियम्बकं यजामह इत्यादीनाहुतिद्वयम्॥

वैश्वदेवेच जुहुयाद्विशेषोऽन्यत्र वै पुनः।
अल्पमृत्युनिवृत्त्यर्थमायुःपुष्टिविवृद्धये॥
जुहुयात् त्र्यम्बकं देवं विल्वपत्रैस्तिलैस्तथा।
विनायकाय होतव्या तया घृतस्य चाहुतिः॥
सर्वविघ्नोपशान्त्यर्थं पूजयेत्सन्ततस्तुतम्।
गणानान्त्विति मन्त्रेण स्वाहाकारान्तपादतः॥
चतस्रो जुहुयात्तस्मै गणेशाय तथाहुतीः।
तद्विष्णोरिति जुहुयाद्विधिसम्पूर्णताकृते॥
प्रणवेन च गायत्र्या केचिज्जुह्वति सद्द्विजाः।
एतौ वै सर्वदैवत्यौ एतत्परन्न किञ्चन॥
एताभ्यां जुहुते नैव सर्वेभ्योऽपि हुतम्भवेत्।
जुहुयात्सर्पिषायुक्तं सव्येन पयसाथ वा॥
व्रीहिन च विकारेण तिलतैलेन वा पुनः।
संप्रोक्ष्य पयसा वापि अस्मात्त मश्नुयादपि॥
अस्नेहाश्चापि गोधूमाः शालयो हवनीयकाः।
हविस्तु हविरभ्युक्तमहविस्तु हविर्यतः॥
अभ्यक्तमिव होतव्य मतोरूक्षं विवर्जयेत्।
दरिद्राश्चिवितामेके रूक्षान्नहवने विदुः॥
जठराग्नेः क्षयश्चैके रूक्षासनमिहोच्यते।
ओङ्कारपूर्विकाः सर्वाः स्वाहाकारान्तिकास्तथा॥
जुहुयादग्निको विप्रो गृहमेधीहि नित्यशः।
बलिशेषञ्च भूतेभ्यः सर्वेभ्योऽप्यविशेषतः॥
हुत्वाथ कृष्णवर्त्मानं कृताञ्जलि प्रसादयेत्।
त्वमग्ने! द्युतिरेतेन मन्त्रेण भक्तिमान् द्विजः॥

आब्रह्मन्निति मन्त्रन्तु जपेद्वै सर्वकामिकम् ।
अद्याव्यग्न इति ह्येतं मन्त्रञ्च प्रयतो जपेत् ॥
अन्यच्चैताशनं मन्त्रं जपित्वा च समापयेत् ।
सर्वशान्तिकरन्त्वथं तथाग्निर्देवतेति च ॥
ज्ञानं धनमरोगित्वं गतिमिच्छंस्तथा द्विजः ।
शम्भुमग्निं रविं विष्णु मर्चयेद्भक्तितः क्रमात् ॥
अजानन् यो द्विजोनित्य मश्नत्वा निस्तृतं हविः ।
पितृदेवमनुष्याणा मृणात्युक्तः प्रयात्यधः ॥
शाकञ्चापि तृणं वापि हुत्वाग्नावश्नुते द्विजः ।
सर्वकामसमायुक्तः सोऽत्रैव सुखमश्नुते ॥
स्वरेण वर्णेन च यद्विहीनं तथैव हीनं क्रियपयापि यच्च ।
तथातिरिक्तं मम तत् क्षमस्व तदस्तु चाग्नेः परिपूर्णमेतत् ॥
सर्वपापप्रणोदाय सर्वकामाय वै द्विजः ।
द्विजन्मनां हितार्थाय वैश्वदेव उदाहृतः ॥
इति श्रीवृहत्पाराशरे वैश्वदेवविधिः ॥

---

आतिथ्यं संप्रवक्ष्यामि चातुर्वर्ण्यफलप्रदम् ।
चतुर्वर्णातिथिः प्रोक्तः कालप्राप्तो बहुश्रुतः ॥
अदृष्टोऽदृष्टगोत्रादिरज्ञाताचारविद्यकः ।
सन्ध्यामात्रकृताचारस्तज्ज्ञैः सोऽतिथिरुच्यते ॥
क्षुत्तृष्णाध्वश्रमश्रान्तः प्राणत्राणान्नयाचकः ।
गृहिणो वैश्वदेवान्ते गृहद्वारमुपागतः ॥
विष्णुरूपोऽतिथिः सोऽयं मत्तारार्थमिहागतः ।
इति मत्वाच भक्त्या च तृप्णुयाद्भोजनायतम् ॥

त्वं भृगुरेन समायात: सर्वदेवमयो विधि:।
निर्दह्य सर्वपापानि ममाचायु: प्रयास्यति ॥
ब्राह्मणै: सह भोक्तव्यो भक्त्या प्रक्षाल्य पादयम्।
आसनार्घादिकं दत्त्वा दत्त्वा स्रक्चन्दनादिकम् ॥
योगिनो विविधैर्वेषैर्भ्रमन्ति धरणीतले।
नराणामुपकाराय ते चाज्ञातस्वरूपिण: ॥
तस्मादभ्यर्चयेत्प्राप्तं श्राद्धकालेऽतिथिं द्विज:।
श्राद्धक्रियाफलं हन्ति तत्र वापूजितोऽतिथि: ॥
तस्मादपूर्वमेवात्र पूजयेदागतोऽतिथि:।
कदाचित्कश्चिदागच्छेत्तारयेद्यस्तु पूर्वजान् ॥
यतिर्वा ह्यग्निहोत्रीच तथापि मखकृद्द्विज:।
सदैतेऽतिथय: प्रोक्ता अपूर्वश्च दिने दिने ॥
अतिथेऽमरदेहस्त्वं सत्कारार्थमिहागत:।
संसारपङ्कमग्नं मा मुद्धरस्वाघनाशने ॥
नैक ग्रामे वसन्नपीह मुनीशैरुच्यतेऽतिथि:।
अन्यत्र दृष्टपूर्वोऽपि नासावतिथिरुच्यते ॥
क्षत्रियो यदि वा गच्छेदतिथिस्तस्य वेश्मनि।
भक्तेषु सत्सु विप्रेषु कामतस्तु तमाशयेत् ॥
वैश्यो वा यदिवा शूद्रो विप्रगृहं समाव्रजेत्।
तौ भृत्यै: सह भोक्तव्यौ इति पाराशरोऽब्रवीत् ॥
क्लीबो वा यदि वा काण: कुष्ठी वा व्याधितोऽपि वा।
आगतो वैश्वदेवान्ते प्रष्टव्य: सर्वदेवता: ॥
दक्षिणेनापि वैश्येन तथा च वृषलेन च।
आतिथ्यं सर्ववर्णानां कर्तव्यं स्यादसंशयम् ॥

योऽतिथीन्पूजयेद्भक्त्या तथाभ्यागमनेन च ।
बालवृद्धादिकस्यैव तस्य विष्णुः प्रसीदति ॥
देवा मनुष्याः पितरश्च सर्वे स्यूर्येन तृप्तेन च भूरि तिष्ठन् ।
तस्मान्नदातुस्त्वमराङ्गनाभिस्तस्यातिथिः केन समन्वमस्ति ॥
इति श्रीबृहत्पाराशरे अतिथिविधिः समाप्तः ॥

---

वर्णधर्मान् प्रवक्ष्यामि यत्कृतं ब्राह्मणादिभिः ।
निबोधध्वं द्विजास्तद्वै संक्षेपेण पृथक् पृथक् ॥
यजने याजने विप्रे तथा दान प्रतिग्रहे ।
अध्यापन मध्ययनं कर्माण्येतानि षट् तथा ॥
प्रजानां रक्षणं दान मरीणां निग्रहन्तथा ।
यजनाध्ययने राज्ञि विषयासक्तिवर्जनम् ॥
यजनाध्ययने दानं पाशुपाल्यन्तथा कृषी ।
वाणिज्यञ्च कुसीदञ्च कर्मषट्कं प्रकीर्त्तितम् ॥
शुश्रूषा ब्राह्मणादीनां तेभ्य आजीवनन्तथा ।
एष धर्मः स्मृतः शूद्रो वाणिज्येन च जीवनम् ॥
सर्वेषां जीवनं प्रोक्तं धर्मेणैव च कर्मणाम् ।
भिन्नवृत्तिर्यथा न स्यात् कुर्य्याद्विप्रस्तथा च तत् ॥
कुर्वन्नुक्तानि कर्माणि वृत्त्या वा क्षत्रियस्य च ।
वृत्त्यभावे द्विजो जीवेद्भिन्नवृत्तिं विवर्जयेत् ॥
क्षत्रिये प्रजापालत्वं शस्त्रभृत्त्वं प्रचण्डता ।
निर्जयेत्परसैन्यानि एष धर्मः स्मृतो नृप ! ॥
पुष्पंपुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ।
मालाकार इवारामे प्रजासु स्यात्तया नृपः ॥

लोहकर्मरथानाञ्च गवाञ्च प्रतिपालनम् ।
गोरक्षा कृषिवाणिज्यं वैश्यवृत्तिरुदाहृता ॥
शूद्रस्य द्विजशुश्रूषा परोधर्मः प्रकीर्तितः ।
अन्यथा कुरुते यस्तु तद्भवेत्तस्य निष्फलम् ॥
लवणं मधु तैलञ्च दधि तक्रं घृतं पयः ।
न दूष्येच्छूद्रजातीनां कुर्य्यात् सर्वस्य विक्रियाम् ॥
विक्रयं मद्यमांसाना मभक्ष्यस्य च भक्षणम् ।
अगम्यागामिता चौर्य्यं शूद्रे स्युः पापहेतवः ॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रस्य नरकं ध्रुवम् ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

अतःपरं गृहस्थस्य कर्माचारं कलौ युगे ।
धर्मसाधारणं साक्षाच्चतुर्वर्णक्रमागतम् ॥
युष्माकं सम्प्रवक्ष्यामि पाराशरप्रचोदितम् ।
षट्कर्मसहितोविप्रः कृषिवृत्तिं समाश्रयेत् ॥
हीनाङ्गं व्याधिसंयुक्तं प्राणहीनञ्च दुर्बलम् ।
क्षुद्युक्तं तृषितं श्रान्तमनड्वाहं न वाहयेत् ॥
स्थिराङ्गं नीरुजं तृप्तं शान्तं षण्ड विवर्जितम् ।
अधृष्टं सबलप्राण मनड्वाहं न वाहयेत् ॥
वाहयेद्दिवसस्यार्धं पश्चात् स्नानं समाचरेत् ।

कुगवैर्न कृषिं कुर्य्यात्सर्वथा धेनुसंग्रहः॥
बन्धनं पालनं रक्षा द्विजः कुर्य्याद्गृही गवाम्।
वत्साश्च यत्नतो रक्ष्या वर्धन्ते ते यथाक्रमम्॥
न दूरे तास्तु मोक्तव्या चरणाय कदाचन।
दूरे गावश्चरन्त्यो वै न भवन्ति शुभायनाः॥
प्रातरेवहि दोग्धव्या दुह्याः सायं तथा गृही।
दोग्धुर्विपर्य्ययेणैव वर्द्धन्ते ताः कदाचन॥
अनादेयतृणास्त्यक्ता स्रवन्त्यनुदिनं पयः।
तुष्टिकृद्देवतादीनां पूज्या गावः कथन्न ताः॥
यस्याः शिरसि ब्रह्मास्ते स्कन्धदेशे शिवः स्मृतः।
पृष्ठे विष्णुस्तथा तस्थौ श्रुतयश्चरणेषु तु॥
या अन्या देवताः काश्चित्तस्या लोमसु ताः स्थिताः।
सर्वं देवमया गौस्तु तुष्येत्तद्भक्तितो हरिः॥
हरति स्पर्शनात्पापं पयसा पोषयन्ति याः।
प्रापयन्ति दिवं दत्ताः पूज्या गावः कथन्न ताः॥
यच्छफाहतभूमेस्तु उद्गताः पांशुसंस्पृशः।
क्षीणयेत् पुरुषस्यैनो वन्द्या गावः कथन्न ताः॥
शकृन्मूत्रं हि यस्यास्तु पितुः पुनाति पातकम्।
किमपूज्यं हि तस्या गौरिति पाराशरोऽब्रवीत्॥
गौरवत्सा न दोग्धव्या नचैवं गर्भसन्धिनी।
प्रसूता च दशाहादर्वाग्दोग्धा चेन्नरकं व्रजेत्॥
दुर्बला व्याधिसंयुक्ता पुष्पिता या द्विवत्सभूः।
सा साधुभिर्न दोग्धव्यावर्णिभिः सुखमीप्सुभिः॥

कुलान्ते पुष्पिता गावः कुलान्ते बहवस्त्रिलाः।
कुलान्ते चलचित्ता स्त्री कुलान्ते बन्धुविग्रहः॥
एकत्र पृथिवी सर्व्वा सशैलवनकानना।
तथा गौ र्ज्यायसी साक्षादेकतोभयतोऽमुखी॥
यथोक्तविधिनायैता वर्ध्याः पाल्यास्तु पूजिताः।
पात्रये त्पूजयन्नेताः सप्रेमेह च मोदते॥
दक्षिणाभिमुखा गाव उत्तराभिमुखा अपि।
बन्धनीयास्तथैतास्तु न च प्राक्पश्चिमामुखा॥
गोवृषा वाजिशालायां सुतीक्ष्णं लौहदात्रकम्।
स्थाप्य तु सर्व्वदा तस्यां गत्रि लुप्तविमोक्षणात्॥
गावो देयाः सदा रक्ष्याः पोष्याः पाल्याश्च सर्व्वदा।
ताड़यन्ति च ये पापा येचाकर्षन्ति ता नराः॥
नरके पच्यन्तेऽङ्गानि क्षारेणच प्रपीड़िताः।
स पशुचर्म दण्डेन मृदु तासां निवर्त्तयेत्॥
गच्छ गच्छेति तां ब्रूयान्मा माभैरिति वारयेत्।
संस्पृशन् गां नमस्कृत्य कुर्य्यात्तान्तु प्रदक्षिणम्॥
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा।
तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम्॥
सोऽश्वमेधसमं पुण्यं लभते नात्र संशयः।
पृथिव्यां यानि तीर्थानि समुद्राश्च सरांसि च॥
गवां शृङ्गोदकस्नाने कलां नार्हन्ति षोड़शीम्।
कुतस्तेषां हि पापानि येषां गृह मलङ्कृतम्॥
सततं बालवत्साभिर्गोभिः स्त्रीभिरिव स्वयम्।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्॥

तिष्ठन्त्येकत्र मन्त्राणि हरिरेकत्र तिष्ठति।
गोभिर्यज्ञाः प्रवर्तन्ते गोभिर्देवाः प्रतिष्ठिताः॥
गोभिर्वेदाः समुद्गीर्णाः स षडङ्गपदः क्रमात्।
सौरभेयास्तु तस्याग्रे पृष्ठतोऽप्यस्य ताः स्थिताः॥
वसन्ति हृदये नित्यन्तासां मध्ये वसन्ति ये।
ते पुण्यपुरुषाः चीर्णां नाकेऽपि दुर्लभाश्च ये॥
शृङ्गमूले स्थितो ब्रह्मा शृङ्गमूले तु केशवः।
शृङ्गाग्रे शङ्करं विद्यास्त्रयोदेवाः प्रतिष्ठिताः॥
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च।
सर्वे देवाः स्थिता देहे सर्वदेवमया हि गौः॥
ललाटाग्रे स्थिता देवी नासामध्ये तु षण्मुखः।
कम्बलाश्च तरौ नागौ तत्कर्णे यौ व्यवस्थितौ॥
स्थितौ तस्याश्च सौरभ्याश्चक्षुषोः शशिभास्करौ।
दन्तेषु वसवश्चाष्टौ जिह्वायां वरुणः स्थितः॥
सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः।
ऋषयो रोमकूपेषु प्रस्रावे जाह्नवीजलम्॥
कालिन्दी गोमये तस्या अपरा देवता स्तथा।
अष्टाविंशतिदेवानां कोट्या लोमसु ताः स्थिताः॥
उदरे गार्हपत्योऽग्नि र्हृदये दक्षिणा स्तथा।
मुखे चाहवनीयस्तु चावसाथ्यौ च कुक्षिषु॥
एवं यो वर्त्तते गोषु ताड़नं क्रोधवर्जितः।
महतीं श्रिय माप्नोति स्वर्गलोके महीयते॥
कुल्यं तस्या न लङ्घेत पूतिगन्धं न वर्जयेत्।
यावत्पिबति तद्गन्धं तावत्पुण्यं प्रवर्धते॥

यो गां पयस्विनीं दद्यात्तरुणीं वत्ससंयुताम्।
शिवस्यायतनं दत्त्वा दत्तं तेन तु विश्वकम्॥
उक्ता गौ र्वेधसा सृष्टा तस्य ह्युत्पादनाय च।
तैरुत्पादितशस्येन सर्वमेतद्धि धार्य्यते॥
यश्चैतान् पालयेत् यत्नात्वर्धयेच्चैव यत्नतः।
जगन्ति तेन सर्वाणि साक्षात् स्युः पालितानि च॥
यावद्गोपालने पुण्यं मुक्तं पूर्वमनीषिभिः।
उक्ष्णोऽपि पालने तेषां फलं दशगुणं भवेत्॥
जगदेतद्धृतं सर्वम नडुहा चराचरम्।
वृष एष्यवतो रक्षा पालनीयस्तु सर्वदा॥
धर्मोऽयं भूतले साक्षाद्ब्रह्मणा हितकारिता:।
त्रैलोक्यं धारणायालमन्नानाञ्च प्रसूयते॥
अनादेयानि घासानि विध्वंसन्ति सकामतः।
भ्रमिता भूतलं दूरमुक्षाणो न पूजयेत्॥
उत्पादयन्ति शस्यानि मर्दयन्ति वहन्ति च।
आनयन्ति दवीयस्य मुक्ष्णोर्वा कोऽधिको भुवि॥
स्कन्धेन दूराञ्च वहन्ति भारं माक्षादि किञ्चिद्यनपत्युरत्र।
स्वीयेन जीवेन परस्य जीवं रक्षन्ति पुष्णन्ति विवर्धयन्ति॥
पुण्यास्तु गावो वसुधातले मां विभ्रत्यसुङ्गोष्ठगर्भभारम्।
भारः पृथिव्या दशताड़िताया एकस्य चाक्ष्णो ह्यपि साधुवाचः॥
एकेन दत्तेन वृषेण येन दत्ता भवेयुर्दश सौरभेयाः।
माहेह्यपीयं धरणीं समाना तस्माद्वृषात् पूजितमस्ति चान्यः॥
उत्पाद्य शस्यानि तृणाञ्चरन्ति तदेव भूयः सकलं वहन्ति।
न भारखिन्नाः प्रवदन्ति किञ्चिदन्होवृषाद्धार्यति जीवलोकः॥

तृतीयेऽह्नि चतुर्थे वा यद्देवोप्ता दृढोभवेत् ।
तदा न सातु भेतव्या नैव प्राग्दुर्बलस्य च ॥
नाम।बेत्रनकीलन्तु खादिरं वाथ सैंशिपम् ।
द्वादशाङ्गुल कङ्कार्ष्यन्तज्जैस्त्रीणि समेच वा ॥
शाला द्विजेन्द्रा वृषगोहयानां ता याम्यदिग्द्वारवतीं विदध्यात्।
सौम्या ककुप्द्वारवतीं सुशोभान्तेषां शमिच्छन् धृतमालनस्य॥
गावो वृषो वा हयहस्तिनोवा अन्येऽपि सर्वे पशवो द्विजेन्द्राः ।
याम्या मुखा दिङ्मखमुत्तरा दिङ्मुखाशका स्ते खल बन्धनीयाः॥
शालाप्रवेशे वृषगोपशूनां राजापि यत्नाद्भयकुञ्जराणाम्।
होमञ्च सप्तार्चिषि शास्त्रयुक्तं कुर्य्याद्विजञ्चो द्विजपूजनञ्च ॥
लाङ्गलं यत्प्रवच्यामि यत्काष्ठं यत्प्रमाणतः ।
हलीशायास्तथात्मानं प्रतोदस्य युगस्य च ॥
चत्वारिंशत्तथाचाष्टा वङ्गुलानि कुहः स्मृतः ।
अथाद्रामङ्गलैर्भोज्यो हलीशा वेश्रतस्य यः ॥
षोड़शैव तु तस्याधः षड्विंशति तथोपरि ।
वेधस्तथाच कर्त्तव्यः प्रमाणेन षड़ङ्गुलः ॥
अष्टाङ्गुलमुरस्तस्य वेधादूर्द्धं प्रकल्पयेत् ।
ग्रीवा दशाङ्गुला चोर्द्धं हस्तग्राही ततः स्मृतः ॥
अङ्गुलैश्चाष्टभिस्तन् स्याद्वेधः स्यात्प्रतिहारकः ।
तस्याधस्ताद्यञ्चत्वारि स वेधश्चतुरङ्गुलः ॥
सार्वत्रञ्चैः शुभा कार्य्या तद्वेधस्त्र्यङ्गुलो भवेत् ।
पञ्चाङ्गुलमुरस्तस्याः शिरस्येति विभाजनम् ॥
पृष्टत्वं शिरसोधार्य्यं हस्ततलप्रमाणकम् ।
अङ्गुलानि तथा चाष्टौ उरसः पृथुता स्मृता ॥

बन्धाद्दहिः प्रतीहारी षड्विंशदङ्गुला भवेत्।
सुतीक्ष्णे लौहपाल्यस्य सुक्तादामादिदारुकृत्॥
नश्वरं चीरवृक्षस्य न विल्वपिचुमर्दयोः।
इत्यादीनां हि कुर्व्वाणं न नन्दति चिरं गृही॥
प्राञ्जला समहस्ता तु हलीषा विदुषा मता।
तस्य वेध्नः सवर्णायाः कार्य्यो नववितस्तिभिः॥
इषाहलयोर्न तत्कुर्य्यात् कीर्त्तिष्मै तौ प्रकीर्त्तितौ।
प्रमादतस्तु ताः कुर्वन् सशस्यो नश्यते गृही॥
नीचोच्चवृषमानेन तज्ज्ञास्तां प्रवदन्ति हि।
चतुर्हस्तं युगं कार्य्यं स्कन्धस्थानेऽर्धचन्द्रवत्॥
शेषस्तृङ्गाः कदम्बस्य शालाधन्यतमस्य च।
तस्या वेधाद्वहिः कार्य्या दशाङ्गुलप्रमाणिका॥
तन्माने च प्रवालीच तदन्तरदशाङ्गुलम्।
प्रतोदविषमग्रन्थि वैणवश्च चतुः करः॥
तदग्रे तु प्रकर्त्तव्या यवाकारातु लौहवत्॥
हीनातिरिक्तं कर्त्तव्यं नैव किञ्चित्प्रमाणतः।
कुर्य्यादनडुहा दैन्याददैन्यां नरकं व्रजेत्॥
यथा भीष्टं तथा शोभं वाहकस्य प्रमाणतः।
भूमेश्च कर्षणायालं तज्ज्ञाः सर्ववदन्ति हि॥
योजनं तु हलस्याथ प्रवक्ष्यामि यथा तथा।
श्रेष्ठनक्षत्र संयुक्ते पुण्येऽह्नि तद्विधीयते॥
यत्र दिने तु बुध्येत तत्र कार्य्यं विजानता॥
यत्र कृत्यं हितं चापि पुण्यं वा मनसि स्मरेत्।
तत्र विद्वान् द्विजश्रेष्टः पुण्येऽह्नि तद्विधीयते॥

मातृश्राद्धं द्विजः कृत्वा यथोक्तविधिना गृही ।
द्रव्यकालानुसारेण कुर्वतो धर्मतः कृषिम् ॥
प्रोल्लिखन् मण्डलं पुष्पधूपदीपैः समर्चयेत् ।
इन्द्राय च तथाश्विभ्यां मरुद्भिश्च तथा द्विजः ॥
कुर्य्याद्बलिं हृतिं विद्वान् उदलग्नन्वयाय च ।
तथा कुमार्य्यै शीतायै अनुमत्यै तथा बलिम् ॥
नमः स्वाहेति मन्त्रेण सर्वानन्नात्मनः शुभम् ॥
दधिगन्धाक्षतापुष्पैः शमीपत्रैस्तिलैस्तथा ।
दद्याद्बलिं वृषाणाञ्च तथाज्यप्राशनं तथा ॥
संस्पृश्य शिरफालाग्रे हेम्ना वा राजतेन वा ।
प्रलेप्य मधुसर्पिभ्यां कुर्य्याच्चैव प्रदक्षिणम् ॥
अग्न्यौक्ष्णौ मण्डलं कुर्य्यात् कृत्वा सीरप्रवाहणम् ।
पुष्पं लाङ्गलकल्याणं कल्याणाय नमोऽस्त्विति ॥
सीतायाः स्थापनं कुर्य्यात् पाराशरऋषिं स्मरेत् ।
सीतां युञ्जत इत्याद्यै र्मन्त्रैःशीरं प्रवाहयेत् ।
दधिदूर्वाक्षतैः पुष्पैः शमीपत्रैश्च पुण्यदैः ॥
सीतां पूज्य वशो भक्तोरक्त वस्त्रविशारणकौ ।
सप्त धान्यानि चादाय प्रोक्ष्य पूर्वामुखो हली ॥
तानि दत्त्वोक्षणः क्षेत्रे किरन् भूमौ कृषेद्द्विजः ।
न यवैर्न तिलैर्हीन द्विजः कुर्य्यात्तो कर्षणम् ॥
तद्विहीनन्तु कुर्वाणं न प्रशंसन्ति देवताः ।
तिलमात्रच्युतं तोयं दक्षिणस्याम्पतेर्द्दिशि ॥
तेन तृप्यन्ति पितरो यावन्न तिलविक्रयः ।
विक्रीणीते तिलान् यस्तु तर्पयेत्सर्पिर्देवताः ॥

विमुच्य पितरस्तन्तु प्रयान्तीव तिलैः सह।
तृषाजलं यवस्तम्बपत्रेभ्यो भूतले पतत्॥
पयोदधिघृताद्यैस्तु तर्पयेत्सर्वदेवताः।
देवपर्ज्जन्यभूसीरयोगात् कृषिः प्रजायते॥
व्यापारात् पुरुषस्यापि तस्मात्तत्रोद्यतो भवेत्।
शालीन् भूशणकार्पासं वार्त्ताकुप्रभृतीनि च॥
वापयेत्सर्वबीजानि सर्ववापी न सीदति।
चन्द्रक्षये यतिर्विप्रो यो युनक्ति वृषान् क्वचित्॥
तत्पञ्चदशवर्षाणि त्यजन्ति पितरो हि तम्।
चन्द्रक्षये द्विजो विद्वान्यो भुङ्क्ते तु पराशनम्॥
भोक्तुर्मासार्जितं पुण्यं भवेदशन मस्य तत्।
चन्द्रार्कयोस्तु संयोगे कुर्याद्यः स्त्रीनिषेवणम्॥
स रेतोभोजिनस्तस्य षण्मासं पितरो हिताः।
चन्द्रक्षये च यः कुर्य्यान्नरस्तरुनिकृन्तनम्॥
तत्पर्णसङ्ख्यया तस्य भवन्ति भ्रूणहत्यकाः।
वनस्पतिगते सोमे योऽध्वान व्रजेन्नरः॥
भ्रष्टद्विजकर्माणं न त्यजन्त्यमरादयः।
वासांसि दुःप्रणाशाय रजकस्या मतिः क्षिपेत्॥
पिबन्ति पितरस्तस्य मासं वस्त्रजलन्तु तत्।
सोमक्षये द्विजो याति तत्कायस्तु कृताशनम्॥
तद्देवं पितृशापाग्निदग्धो नरक माविशेत्।
अष्टमीं कामभोगेन षष्ठी तैलोपभोगिना॥
कुद्दृत्य दन्तकाष्ठेन हिनस्त्यासप्तमं कुलम्।

चन्द्राप्रतीताः पुरुषास्तु दैवा दद्यादपत्या यदि दन्तकाष्ठम् ।
नराधिराजः सहितस्तु तेन घातः कृतः स्यात्पितृदेवतानाम् ॥

तत्राभ्यज्य विषाणानि गावश्चैव वृषास्तथा ।
चरणाय विसृज्यन्ते आगतान्निशि भोजयेत् ॥
य उत्पाद्येह शस्यानि सर्वाणि तृणचारिणः ।
जगत्सर्वं धृतं यैस्तु पूज्यन्ते किन्न ते वृषाः ॥
येनैकेन प्रदत्तेन दत्तं गोदशकम्भवेत् ।
यद्रूपेण स्थितो धर्मः पूज्यन्ते किन्न ते वृषाः ॥
पाल्याहि यत्नतस्ते वै वाहनीया यथाविधि ।
स याति नरकं घोरं यो वाह यत्यपालयत् ॥
नाधिकाङ्गो न हीनाङ्गः पुष्पिताङ्गो न दूषितः ।
वाहनीयो हि शूद्रेण वाहयन् क्षयमाप्नुयात् ॥
वर्जयेद्दुष्टदोषांश्च गावो वै दोहने नरः ।
पाल्या वै यत्नतः सर्वे पालयन् शुभमाप्नुयात् ॥
अन्नार्थं मेतानुद्धाणः ससर्ज परमेश्वरः ।
अन्नेनाप्यायते सर्वं त्रैलोक्यं सचराचरम् ॥
अग्निर्ज्वलति चान्नार्थं वाति चान्नाय मारुतः ।
गृह्णाति चाम्भसां सूर्यो रसानन्नाय रश्मिभिः ॥
अन्नं प्राणो बलं चान्न मन्नाज्जीवित मुच्यते ।
अन्नं सर्वस्य चाधारः सर्व मन्ने प्रतिष्ठितम् ॥
सुरादीनां हि सर्वेषा मन्न बीजं परं स्थितम् ।
तस्मादन्नात्परं तत्वं न भूतं न भविष्यति ॥
द्यौः पुमान्धरणी नारी अम्भोबीजन्दिवश्च्युतम् ।
धात्री तोयसंयोगादन्नादीनां हि सम्भवः ॥

आपोमूलं हि सर्वस्य सर्वमप्सु प्रतिष्ठितम् ।
आपोऽमृतरसो ह्याप आपः शुक्रं बलं महः ॥
सर्वस्य बीज मापो वै सर्वं मद्भिः समावृतम् ।
अथ आप्यायना ह्यापः आपो ज्येष्ठतरा ह्यतः ॥
किञ्चित्कालं विनाऽन्नाद्यै र्जीवन्ति मनुजादयः ।
न जीवन्ति विना तानि तस्मादापोऽमृतं स्मृतम् ॥
दत्तानि चाद्भिरेतस्यां किं न दत्तं क्षितौ भवेत् ।
तथान्नेन प्रदत्तेन सर्वं दत्तं भवेदिह ॥
अतोऽप्यन्नार्थभावेन कर्त्तव्यं कर्षणं द्विजः ।
यथोक्तेन विधानेन लाङ्गलादिप्रयोजनम् ॥
सीते ! सौम्ये ! कुमारि ! त्व देवि ! देवार्चिते ! श्रिये ।
सत्कृताहि यथासिद्धा तथा मे सिद्धिदा भव ॥
सकृत् सूनोर्विना नाम्ना सीतयाः स्थापनं विना ।
विनाभ्युक्षणरक्षार्थं सर्वं हरति राक्षसः ॥
वापने नवने क्षेत्रे खले गन्त्रीप्रवाहणे ।
एष एव विधिर्ज्ञेयो धान्यानाञ्च प्रवेशने ॥
देवतायतनोद्यानानिपातस्थानगो व्रजन् ।
सीमा श्मशानभूमिञ्च वृक्षच्छाया क्षितिं तथा ॥
भूमिं निखातयूपाञ्च अयनस्थानमेव च ।
अन्यामपि हि चावाह्यां न कृषन् कृषिकृत् हराम् ॥
नोषरां वाहयेद्भूमिं वर्चाश्मककरीष्टताम् ।
वाहयन्नाप्रमत्तश्च न नदीपुलिनं तथा ॥
यद्यसौ वाहयेल्लोभात्द्वेषाद्वापि हि मानवः ।
क्षीयतेऽसौ चिरात्पापात् सपुत्रपशुबान्धवः ॥

नरकं घोरतामिस्रं पापीयान्याति चैनसः॥
योऽपहृत्य परकीयां कृषिकृद्वाहयेद्धराम्।
स भूमिस्थेन पापेन ह्यनन्तनरकं वसेत्॥
न दूरे वाहयेत् क्षेत्रं नचैवात्यन्तिके तथा।
वाहयेन्नपथे क्षेत्रं वाहयन्दुःखभाग्भवेत्।
क्षेत्रेष्वेव वृतिं कुर्य्यात् स दृष्टो नावलोकयेत्॥
न लङ्घयेत्पशूनासो नाभीयाद्याच्च शूकरः।
बन्धश्च यत्नतः कार्य्यो मृगयुत्रासनाय च॥
अत्राप्युपद्रवं राजा तस्करादिसमुद्भवम्।
संरक्षेत्सर्वतो यत्नाद्यस्मात् ग्टह्णात्यसौ करात्॥
कृषिकृन्मानवस्त्वेवं मत्वा धर्मं कृषे र्ध्रुवम्।
अनवद्यां शुभां स्निग्धां जलावगाहनक्षमाम्॥
निम्नां हि वाहयेद्भूमिं यत्र विश्रमते जलम्।
वाहयेत्त जलाभ्यर्णो अपुष्टोऽसेकसम्भवैः॥
शारद सुस्वकैः स्थानं कश्वादि वापयेद्बली।
अर्धाम्रकासुकार्पासं तदन्यत्र तु हैमतम्॥
वसन्तग्रीष्मकालीय मप्यूस्निग्धेषु तद्विदः।
केदारेषु तथा शालीन् जलोपान्तेषु चेक्षवः॥
वृन्ताकशाकमूलानि कन्दानि च जलान्तिके।
वृष्टिविश्रान्तपानीयक्षेत्रेषु च यवादिकान्॥
गोधूमांश्च मसूरांश्च खल्लान् खलकुलन्तथा।
समस्निग्धेषु चाप्यानि भूमिजीवान् विजानता॥
तिला बहुविधा वाप्या अतसीशणमेव च।
मुद्गस्तु यो जगत्सर्वं वापयेत्कृषिकृन्नरः॥

सम्प्रश्रवेन्नरतः सर्वान् गोवृषादीन् स्वयङ्कृती।
चिन्तयेत्सर्वमात्मानं स्वयमेव कृषिं व्रजेत्॥
प्रथमं कृषिवाणिज्यं द्वितीयं योनिपोषणम्।
तृतीये विक्रयं बक्रं चतुर्थं राजसेवनम्॥
नखैर्विलिखने यः स्यात् ब्रूयुर्दोषं मनीषिणः।
तस्याः सीरविदारेण किन्न पापं क्षितेर्भवेत्॥
तृणैकच्छेदमात्रेण प्रोच्यते क्षयमायुषः।
असङ्ख्यकन्दनिर्वासादसङ्ख्यातम्भवेद्यम्॥
यद्वर्षं मत्स्यबधानां तथा सङ्कर्षणामपि।
अहः कुक्कुटिकानाञ्च तद्दिने कृषिजीविनाम्॥
बधकानाञ्च यत्पापं यत्पापं मृगयोरपि।
कदर्य्याणाञ्च यत्पापं यत्पापं कृषिजीविनाम्॥
वर्णानाञ्च गृहस्थानां कृषिवृत्त्युपजीविनाम्।
तदेनसो विशुद्ध्यर्थं प्राह सत्यवतीपतिः।
द्वादशो नवमो वापि सप्तमः पञ्चमोऽपि वा॥
धान्यभागः प्रदातव्यो देहिनः चोत्तिणो ध्रुवम्।
अष्टमर्य्यद्भूतभूमौ च विशाब्धिर्हितभुग्भवेत्॥
एकैकांशापकर्म स्याद्यावद्ग्रामसप्तमौ।
ग्रामेशस्य नृपस्यापि वर्णिभिः कृषिजीविभिः॥
स तु भागः प्रदातव्यो यतिस्ते कृषिभागिनौ।
व्यूढौ त्व मध्यमात्रायां देयोऽशः स्याच्चतुर्दशः॥
एकैकांशाय चर्षस्तु यावद्ग्रामसप्तमौ।
ब्राह्मणास्तु कृषिं कुर्वन्वाहयेदिच्छया धराम्।
न किञ्चित्कस्यचिद्दद्यात्स सर्वस्य प्रभुर्यतः।

ब्रह्मा वै ब्राह्मणानां स्वात्मभुखस्वजदादितः ॥
तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि ।
पशुपाल्याथनोत्पत्त्यै ऊरुभ्याञ्च तथा विशः ॥
द्विजदास्याय पद्भ्याय पद्भ्यां शूद्रमकल्पयत् ।
यत्किञ्चिज्जगती यत्र भूगेहाश्च गजादिकम् ॥
स्वभावेनेह विप्राणां ब्रह्मा स्वयमकल्पयत् ।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ॥
न तयोरन्तरं किञ्चित्प्रजा धर्मेण रक्षयेत् ।
तस्मान्न ब्राह्मणो दद्यात् कुर्वाणो धर्मतः कृषिम् ॥
ग्रामेशस्य नृपस्यापि किञ्चिन्नमप्यसौ बलिम् ।
अथान्यत्सम्प्रवक्ष्यामि कृषिकृच्छुद्धिकारणम् ॥
संशुद्धः कर्षको येन स्वर्गलोकमवाप्नुयात् ।
सर्वसत्त्वोपकाराय सर्वत्र कृषिकृन्नरः ॥
कुर्य्यात् कृषिं प्रयत्नेन सर्वसत्त्वोपजीव्यकृत् ।
सर्वस्य स्थितिकारणत्वात्स देवपितृभिः पुनः ॥
मनुष्याणान्तु पोष्याय कृषिं कुर्य्यात् कृषीबलः ।
वयांसि चान्यसत्त्वानि क्षुत्तृष्णापीड़ितो द्विजः ॥
विमुक्तः सर्वपापेभ्यः स्वर्लोकस्तमवाप्नुयात् ।
चतुर्दिक्षु खले कुर्य्यात्प्राच्यामतिघनावृतिम् ॥
सैकद्वारपिधानञ्च पिदध्याच्चैव सर्वतः ।
खरोष्ट्राजीरणास्तत्र विशतस्तु निवारयेत् ॥
श्वशूकर शृगालादिकाकोलूककपोतवान् ।
त्रिसन्ध्यं प्रोक्षणं कुर्य्यात् दानीयाभ्युक्षणाम्बुभिः ॥
रक्षा च भस्मना कुर्य्याज्जलधाराभिरक्षणम् ।

त्रिसन्ध्य मर्च्चयेत्सीतां पराशरमृषिं स्मरन् ।
प्रेतभूतादिनामानि न वदेच्च तदग्रतः ॥
सूतिकागृहवत्तत्र कर्त्तव्यन्तत्र रक्षणम् ।
हरन्त्यरक्षितं यस्मात् रक्षांसि सर्वमेव हि ॥
प्रशस्तादिव पूर्वाह्णो नापराह्णे न सन्ध्ययोः ।
धन्योन्मानं सदा कुर्यात्सीतापूजनपूर्वकम् ॥
यजेत खलभिक्षाभिः कलेरोहिण्यएव हि ।
भक्त्या सर्वं प्रदत्तं हि तत्समस्तमिहाक्षयम् ॥
खलयज्ञा पत्निर्येषा ब्रह्मणा निर्मिता पुरा ।
भागधेयमयां कृत्वा तां गृह्णन्त्वीह मासिकाम् ॥
शतक्रत्वादयो वैराः पितरः सोमपादयः ।
सनकादिमनुष्यांश्च येषान्ये दक्षिणाशनः ॥
तदुद्दिश्य च विप्रेभ्यो दद्याच्च प्रथमं हली ।
विवाहे खलयज्ञे च संक्रान्तौ ग्रहणेषु च ॥
पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् ।
अन्येषामर्थिनां पश्चात्कारुकाणां पुनः पुनः ॥
दीनानामप्यनाथानां कुष्ठीनां कुशरीरिणाम् ।
क्लीवान्धवधिरादीनां सर्वेषामपि दीयते ॥
वर्णानां पतितानाञ्च ब्युहग्भूतानि तर्पयेत् ।
चाण्डालानांश्च पाकानां प्रीत्यात्युच्चावचाददत् ॥
ये केचिदागतास्तत्र पूज्यास्ते विधिवद्द्विजाः ।
स्तोकशः सीरिभिः सर्वे वर्णिभिर्गृहमेधिभिः ॥
दत्त्वात्वनृतया वाचा क्रमेणाथ विसर्जयेत् ।
तत्कृत्वा स्वगृहं गच्छेच्छाद्धमभ्युदयं श्रयेत् ॥

शरद्वद्धे मन्त्रसन्तनवान्नैः श्राद्धमाचरेत्।
नो कृत्वान्नन्तदश्नीयादश्नन्तं तद्वयमश्नुते॥
कृषानुत्पाद्य धान्यानि खलयज्ञं समाप्य च।
सर्वरत्नविहीनो युक्त इहामुत्र सुखी भवेत्॥
कृषेरन्यतमो धर्मो न लभेत् कृषितोऽन्यतः।
न सुखं कृषितोऽन्यत्र यदि धर्मेण कर्षति॥
अवस्त्रत्वं निरन्नत्वं कृषितो नैव जायते।
अनातिथ्यञ्च दुस्तत्वं गोमतो न कदाचन॥
निर्धनत्वमसस्यत्वं विद्यायुक्तस्य कर्हिचित्।
अस्थानित्वमभाग्यत्वं न सुशीलस्य कर्हिचित्॥
वदन्ति कवयः केचित् कृष्यादीनां विशुद्धये।
लाभस्यासंप्रदानञ्च सर्वेषां शुद्धिकृद्भवेत्॥
प्रतिग्रहचतुर्थांशं वणिग्लाभं तृतीयकम्।
कृषितो विंशतिश्चैव ददते नास्ति पातकम्॥
राज्ञो दत्त्वा च षड्भागं देवतानां च विंशकम्।
त्रयस्त्रिंशञ्च विप्राणां कृषिकर्मा न लिप्यते॥
कृष्या च चोत्पाद्य यवादिकानि
धान्यानि भूयांसि मखान्विधाय।
मुक्तो गृहस्थोऽपि पराशरप्राक्
तस्यामयः कश्चिदवादिदोषाः॥
देवा मनुष्याः पितरश्च सर्वे साध्याश्च यक्षाश्च सकिन्नराश्च।
गावो द्विजेन्द्राः सह सर्वसत्वैः कृष्यं न तृप्तानि मनाक् द्युरेति॥
यश्चैतदालोच्य कृषिं विदध्यात् लिप्येत पापेन स भूभवेन।
सीरेत तस्यानि विदारितापि स्याद्भूतधात्री वरदानदात्री॥

षट् कर्माणि कृषिं येतु कुर्युर्ज्ञानविधिं द्विजाः।
ते सुरादिवरप्राप्ताः स्वर्गलोकमवाप्नुयुः॥
षट्कर्मभिः कृषिः प्रोक्ता द्विजानां गृहमेधिनाम्।
गृहञ्च गृहिणीमाहुस्तद्विवाहमथोच्यते॥
इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रणीतायां कृषिकर्मसीतायज्ञोपवर्णनं नाम तृतीयोऽध्यायः॥

---

## चतुर्थोऽध्यायः।

स्वयञ्च वाहयेत् चेत्रै धान्यैश्च स्वयमर्जितैः।
कुर्याद्विवाहयागादिपञ्चयज्ञांश्च नित्यशः॥
अष्टौ विवाहा नारीणां संस्काराय प्रकीर्तिताः।
ब्रह्मादिक क्रमेणैव सम्प्रवक्ष्याम्यतः पृथक्॥
जात्यादिगुणयुक्ताय पुंस्त्वे सति वराय च।
कन्यालङ्कृत्य दीयेत विवाहो वेधसः स तु॥
रेतो मज्जति यस्यास्तु मूत्रञ्च ह्रादिकेऽनिलम्।
पुमान् स्यात् लक्षणैरेतै विपरीतैश्च षण्डकः॥
ये यज्ञे वर्त्तमाने तु ऋत्विजः कर्म कुर्वते।
कन्यालङ्कृत्य दीयेत विवाहः स तु दैवकः॥
वराय गुणयुक्ताय विदुषे सदृशाय च।
कन्या गोद्वयमादाय दीयेतार्षः स उच्यते॥
कन्या चैव वरश्चोभौ इच्छया धर्मचारिणौ।
स्यातामिति च यत्रोक्ता दानं कार्यं विधिस्त्वयम्॥
एतावद्देहि मे द्रव्य मित्युक्त्वा प्राक् प्रदाय च।

यत्र कन्यां प्रदीयेत स दैवत्यविधिः स्मृतः ॥
यत्रान्योन्याभिलाषेण उभयोर्वरकन्ययोः ।
तयोस्तयोर्विवाहः स्याद्गान्धर्वः प्रथितः स तु ॥
युद्धे हृत्वा बलात्कन्यां यत्रास्थित्याप इत्यृचा ।
उह्यन्तु स तु विद्वद्भिर्विवाहो राक्षसः स्मृतः ॥
सुप्तां वापि प्रमत्तां वा कन्यां छलेन भुज्यते ।
सर्वेभ्यः स तु पापिष्ठः पैशाचः प्रथितोऽष्टमः ॥
आद्या वाद्यस्य षट् प्रोक्ता धर्माश्चत्वार एव हि ।
चत्वारोऽन्ये द्वितीयस्य आद्यस्य च द्वयस्य च ॥
पञ्चमश्च तथाषष्ठः स्मृतौचतु चतुर्थयोः ।
द्वितीयस्यापि यत्प्रोक्ता एतयोस्तेन चाष्टमः ॥
वैधस्याद्यनुरूपेण द्वितीयापरयोः स्मृतः ।
सर्वसप्तममेकस्याद्वितीयस्यैव कीर्त्तितः ॥
अन्त्यावत्यधमौ चोक्ता वद्वाहः शक्रसूनुना ।
यथायुधस्वरूपेण प्रोक्तो दैत्यस्तु मानुषः ॥
वार्त्तायां प्राक्ततोऽधस्ताच्चतुराद्यविवाहजैः ।
स्वात्मानं द्विगुणान्वश्याद्दश सप्त च यस्य षट् ॥
स्त्रीणामाजन्मशर्मार्थं वंशशुद्धौ प्रयत्नवान् ।
वरं हि कवयो विद्वान् जात्यादिगुणसंयुतम् ॥
जातिर्विद्यावयः शक्तिरारोग्यं बहुपक्षता ।
अर्थित्वं वित्तसम्पत्तिरष्टावेते वरे गुणाः ॥
जातिर्विद्या च रूपञ्च कुलञ्चैव नवं वयः ।
आरोग्यत्वं विशेषेण पुंस्त्वे सत्यपि भक्षयेत् ॥
जातीरूपञ्च शीलञ्च वयो नवमरोगितः ।

स्वाचरत्वं विशेषेण सलक्षवरमाश्रयेत् ॥
स याति रूपं वित्तञ्च तथाग्रे वयसं दृढम् ।
सन्तोषजननं स्त्रीणां प्रज्ञावानाश्रयेद्वरम् ॥
न जातिं नच विद्याञ्च वित्तं वाचरणं स्त्रियाम् ।
किमु तत्प्राप्तिमिच्छन्ति तस्मात्प्रीतिकरं श्रयेत् ॥
पिता यत्र सगोत्रत्वं माता यत्र सपिण्डता ।
न च तामुद्वहेत्कन्यां दारकर्मण्यनादृताम् ॥
कन्यायाश्च वरस्यापि सन्तोभयो भवेद्धृतिः ।
तथा कन्यां वरो धीमान्वरयेद्वंशशुद्धये ॥
नानामतानि सर्वेषां सतां कन्यां वरं प्रति ।
सन्तानार्थं विशुद्ध्यर्थं जात्यादिषु च नान्यतः ॥
दूरस्थानामविद्याना मोक्षं धर्मानुयायिनाम् ।
शूराणां निर्धनानाञ्च न देया कन्यका बुधैः ॥
वर्जयेदतिरिक्ताङ्गीं कन्यां हीनाङ्गरोगिणीं ।
अतिलोम्नीं हीनलोम्नी मवाचमतिवाग्युताम् ॥
पिता पितामहो भ्राता माता मातामहोऽपि वा ।
कन्यदाः स्युः क्रमेणैते पूर्वाभावे परः परः ॥
अधिकारी यदा न स्यात्तदस्याथ नृपस्य सा ।
तद्विराच स्वयङ्गम्यं कन्यापि वरयेद्वरम् ॥
पिङ्गलां कपिलां कृष्णां दुष्टवाक्काकनिस्वनाम् ।
स्थूलाङ्गजङ्घपादाञ्च सदा चाप्रियवादिनीम् ॥
त्यजेन्नागनदीनाम्नीं पक्षिवृक्षर्दनामिकाम् ॥
अहिप्रत्याल्यनाम्नीञ्च तथाभीषणनामिकाम् ।
सुजातिमुद्वहेत्कन्यां सुरूपां लक्षणान्विताम् ॥

अरोगिणीं सुशीलाञ्च तथा च्चाहमतीमपि ।
सुलज्जां शुभनासाञ्च पतिप्रीतिकरीमपि ॥
श्वश्रुश्वशुरगुर्वादिशुश्रूषाकारिणीं प्रियाम् ।
अव्यङ्गकुलसञ्जाता मनभिश्वस्तवंशजाम् ॥
प्रस्वेदसुभगां धाता शुभमिच्छन् समुद्वहेत् ।
विप्रः स्वामपरेद्वेतु राजा स्वामपरे तथा ॥
वैश्यः स्वाञ्च चतुर्थीञ्च क्रमेणैव समुद्वहेत् ।
पितृभिः सप्तमीमेके मातृतः पञ्चमीमपि ॥
उद्वहेदितिमत्यन्ते कुलधर्मसमाश्रिताः ।
उक्त लक्षणकन्यायां कृत्वा पाणिग्रहं द्विजः ॥
धर्मोद्वाहनकेनापि तदा दद्याद्धुताशनम् ।
दायाद्यकाले वा दद्यात्तदुक्तं कर्मकृद्द्विजः ॥
यदा वापि भवेद्भक्तिः सम्पत्तिर्वा तदा भवेत् ।
ऋतावृतौ स्त्रियङ्गच्छेत् स्त्रीच्छया चवरं स्मरन् ॥
सर्वन्तदिच्छया कुर्याद्यथाभयोभवेद्धृतिः ।
भोज्यालङ्कारवासोभिः पूज्याः स्युः सर्वदा स्त्रियः ॥
यथा किञ्चिन्न शोचन्ति नित्यं कार्य्यन्तथा नृभिः ।
आयुर्वित्तं यशः पुत्राः स्त्रीप्रीत्या स्यु र्नृणां सदा ॥
नश्यन्ते ते तदा प्रीतौ तासां शापादसंशयः ।
स्त्रियश्च यत्र पूज्यन्ते सर्वदा भूषणादिभिः ॥
देवाः पितृमनुष्याश्च मोदन्ते तत्र वेश्मनि ।
स्त्रियस्तुष्टाः स्त्रियः साक्षाद्दुष्टाश्च दुष्टदेवताः ॥
वर्धयन्ति कुलन्तुष्टाः नाशयन्त्यपमानिताः ।
नापमान्याः स्त्रियः सद्भिः पतिश्वशुरदेवरैः ॥

भ्रात्रा पिता च माता च तथा बन्धुभिरेव च।
स्त्री यस्य पुरुषस्यापि यतीभयो भवेद्भृतिः॥
तत्र धर्मार्थकामाः स्युः स्वदधीना यतस्त्वमी।
षट् कर्माणि नृणान्तेषां येषां भार्य्या पतिव्रता।
पतिलोकन्तु ता यान्ति तपसा तेन योगवित्॥
पतिव्रता तु साध्वी स्त्री अपि दुष्कृतकारिणी।
पतिमुद्धृत्य याति द्यां काकीव पतिता रुजाम्॥
जीवन्वापि मृतोवापि पतिरेव प्रभुः स्त्रियाम्।
नान्यच्च देवता तासां तमेव प्रभुमर्चयेत्॥
अन्यस्य पि हि दुष्टा स्त्री यान्यभावा प्रियम्पतिम्।
सा गच्छेन्नरकं घोरन्तद्रोहाद्द्युतेऽपि च॥
नियोज्य गृहकृत्येषु सर्वदा ता नृभिः स्त्रियः।
गृहार्थासक्तचित्तास्तास्तदेवार्हन्ति शोचितुम्॥
स्त्रीणामष्टगुणः कामो व्यवसायश्च षड्गुणः।
लज्जा चतुर्गुणा तासा माहारश्च तदर्द्धकः॥
न वित्तं नैव जातिश्च नापिरूपमपेक्षते।
किन्तु ताभिः पुमानेष इति मत्वेव भुज्यते॥
विकुर्वाणाः स्त्रियो भर्त्तुरायुष्यधननाशकाः।
अनायासेन वा स्वस्य यथाशक्त्या भवन्ति हि॥
नारीणाञ्च नदीनाञ्च न गतिर्ज्ञायते नृभिः।
कूलं कूलं प्रयायिन्योः कालक्षेपो न जायते॥
चेष्टाचरित्रचित्तानि देवानेव विदुः स्त्रियाम्।
किं पुनः प्राणिमात्रा स्तु सर्वथा नष्टबुद्धयः॥

तस्मात्ताः सर्वथा रक्ष्याः सर्वोपायैर्नृभिः सदा।
श्वशुरैर्देवराद्यैस्ताः पितृभ्रात्रादिभिस्तथा॥
विवाहात् प्राक् पिता रक्षेत्ततः पतिस्तु यौवने।
रक्षेयुर्वार्द्धके पुत्राः नास्ति स्त्रीणां स्वतन्त्रता॥
स्वातन्त्र्येण विनश्यन्ति कुलजा अपि योषितः।
न स्वातन्त्र्य मतस्तासां प्रजापति रकल्पयत्॥
अशौचाश्च सशौचाश्च अमेध्या अपि पावनाः।
दुर्वाचोऽपि सुवाचस्ता स्तस्मादन्वेषयेत्ततः॥
शौचं वाचं च मेध्यत्व सोमगन्धर्वपावकाः।
ददुस्तासां वरानेतां स्तस्मान्मेध्यतराः स्त्रियः॥
भर्त्तारो वो भविष्यन्ति युष्मच्चित्तानुसारिणः।
रक्षणीयास्तत स्तास्तु सर्वभावेन योषितः॥
समाहृत्यकृत्य मिद्याद्यैर्देवन्यस्तां नृणां तनौ।
अर्धकाया नृणां तास्ताः पृथक् धर्मादिना स्वयम्॥
नदी वापी स्त्रियं गच्छेन्न सगर्भां व्यवस्थिताम्।
अभिगच्छेदविद्वान् यस्तदा भूः क्षयमेति च।
नदी वापी स्त्रियं गच्छेदिच्छं स्तदिच्छयापि च॥
न पर्वसु न सन्ध्यासु नाद्यार्त्तुचतुरात्रिषु।
वन्ध्याष्टमेऽधिवेत्तव्या नवमे च मृतप्रजा॥
एकादशी स्त्रीजननी सद्यस्त्वप्रियवादिनी।
न वक्त्रेऽभिगमं कुर्य्यात्प्राणी गृहीतयोषितः।
कुर्य्याच्चेत्पितर स्तस्य पतन्ति रेतसोभुजः॥
भार्य्याधीनं सुखं पुंसां भार्याहीनं गृहं वनम्।

भार्य्याधीना सुखोत्पत्ति र्भार्य्याधीनः शुभोदयः॥
यत्र भार्य्या गृहं तत्र भार्य्याधीनं गृहं वनम्।
न गृहेण गृहस्थः स्यात् भार्य्यया कथ्यते गृही॥
गृहीस्याद् गृहधर्मेण स वै पञ्चमखादिकाः।
तद्धीनो न गृहस्थः स्यात् भार्य्यया कथ्यते गृही॥
श्रौती वा यदि वा स्मार्त्तः सर्वेषां गृहमेधिनाम्।
कण्डन्युदककुम्भीच चुल्ली पेषण्युपस्करम्॥
पञ्चयज्ञविधानेन कुर्यात्पञ्च महामखान्॥
पञ्चसूना वहन्त्यत्र सूनादोषो न विद्यते॥
यज्ञादौ वेदमारभ्य स्नात्वा भक्त्या द्विजोत्तमः।
अध्यापयेद्द्विजान् शिष्यान् स वै ब्रह्ममखः स्मृतः॥
यः स्नात्वाऽहरहः कुर्या द्देवांश्च मनुजान् पितॄन्।
तर्पयेदम्भसा भक्त्या पितृयज्ञः सवै मखः॥
श्रौतेवा यदि वा स्मार्त्ते यज्जुहोति हुताशने।
विधिवत्त्रिः सवै विप्रः स तु देवमखः स्मृतः॥
दशस्वाशासु यः कुर्याद्व तशेषो वलिं द्विजः॥
इन्द्रादिभ्यस्तथान्येभ्यः स वै भूतमखो मतः।
समागतातिथिं भक्त्या यद्भोजयति नित्यशः॥
अन्यानभ्यागतांश्चैव समानीयेष्टि रुच्यते।
एवं पञ्चमखत्वं स्यान्मधुमांसाज्यपायसम्॥
स सन्तर्प्य पितॄन् देवान् मनुजः स्वर्गमाप्नुयात्।
गृहस्थायौषधिं मत्वा त्वाचं धेनुं चतुःस्तनीम्॥
स्वर्गौकसः पितॄन् देवान् पुन्यातिथिवरानपि।

स्वर्गौकोभिः पितृभ्यस्तु पुज्यास्तेऽतिथयो द्विजैः ॥
चत्वारस्तु सुता एते यजुर्वेद उदाहृतः।
स्वाहाकारो वषट्कारो हन्तकार स्तथा स्वधा ॥
दैवानि भागधेयौ द्वौ अन्यश्च मनुजां स्तथा।
पितृणाञ्च चतुर्थस्तु इतिवेदनिदर्शनम् ॥
इति निवृत्य विधिवत्सकलं कर्म नैत्यिकम् ॥
प्राणाग्निहोत्रविधिना भुञ्जीतान्न मघापहम्।
अदत्त्वा पोष्यवर्गस्य ह्यकृत्वाऽध्यापनादिकम् ॥
असात्त्विकश्च योऽश्नीयात्सोऽश्नीयात्किल्बिषं द्विजः।
प्राङ्मुखादिक्रमेणाश्नु दिव्यायुः कीर्तिकीर्त्तितम् ॥
दिव्याग्निस्थानञ्चाद्यादृयत्तदश्नन्ति राक्षसाः ॥
अथ प्राणाग्निहोत्रस्य श्रूयतां द्विजसत्तमाः ! ॥
वक्ष्यमाणो विधिः पुन्यः पावनः प्रेत्य चेह च।
यो विधि देवतान्यस्तसंसारबन्धनाशकृत् ॥
तद्विदस्त दिवं यान्ति मुक्ता देवान् ऋणेन च।
उद्धरेद्यदि मत्वाश्नु पुरुषानेकविंशति ॥
सर्वेष्टिफलभाक् यायाद्देधसं क्षय मक्षयम्।
यः कालाकालविद्विप्रो नैनःस्पर्शी स कर्हिचित्।
सोऽस्पृष्टो नाविशेत्तत्र यद्गत्वा नैव संसृतौ।
दशपञ्चाङ्गुलव्याप्तं नासिकाया बहिःस्थितम् ॥
जीवो यत्र विशुद्ध्येत सा कला षोडशी स्मृता।
सर्वमेतत्तया व्याप्तं त्रैलोक्यं सचराचरम् ॥
ब्रह्मविद्येति विख्याता वेदान्ते च प्रतिष्ठिता।

न वेदं वेदमित्याहुर्वेदन्नाम परम्पदम् ॥
तत्पदं विदितं येन स विप्रो वेदपारगः ।
आहुतिः सा परा ज्ञेया सा च शान्तिः प्रकीर्तिता ।
गायत्री सा च विज्ञेया सा च सन्ध्या प्रकीर्तिता ॥
तज्जप्य तच्च वै ज्ञेयं तद्व्रतं तदुपासितम् ।
तां कलां यो विजानाति स कलज्ञो द्विजः स्मृतः ॥
यत्तुरीयं पदं प्रोक्तं यस्मिन् लीन मिदं जगत् ।
तत् ज्ञात्वा परमं तत्त्वं न भूयः पुरुषो भवेत् ॥
प्राणमार्गास्त्रयः प्रोक्तास्तिस्रो नाड्यः प्रकीर्तिताः ।
इड़ा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥
इड़ा च वैष्णवी नाड़ी ब्रह्माणी पिङ्गला स्मृता ।
सुषुम्ना चेश्वरी नाड़ी त्रिधा प्राणवधा स्मृता ॥
उत्तरं दक्षिणं ज्ञेयं दक्षिणोत्तरसंज्ञितम् ।
मध्येतु विषुवं ज्ञेयं पुटद्वयविनिःसृतम् ॥
संक्रान्तौ विषुवञ्चैव यो विजानाति विग्रहम् ।
नित्यमुक्तः स योगी च ब्रह्मवादिभिरुच्यते ॥
मध्याह्ने चार्धरात्रे च प्रभातेऽस्तमये तथा ।
विषुवन्तं विजानीयात्पुटद्वयविनिःसृतम् ॥
हृत्पुण्डरीकमरणीं मनोमन्थनमेव च ।
प्राणरज्वा न्यसेदग्नि रात्माध्वर्यु प्रतिष्ठितः ॥
ज्वालयेत्पूरकेणाग्निं स्थापयेत्कुम्भकेन तु ।
रेचकेणोर्ध्ववक्रेण ततो होमं करोति यः ॥
यत्तद्धृदि स्थितं पद्ममधोनालं व्यवस्थितम् ।

तद्वै विकासते पद्मं प्रणवन्तञ्च सर्पति ॥
वामहस्तधृते पात्रे दक्षिणे चाम्भसि स्थिरे।
सनाद मुद्गरेद्विप्र आच्छन्नाग्रन्तु पूरयेत् ॥
पूरयेत् पूरकं प्राङ्क निश्चलं कुम्भकं भवेत्।
विनिहत्य शनैर्वायुं रेचकान्तं विनिर्दिशेत् ॥
स्वाहान्तैः प्रणवाद्यैश्च स्वस्वनाम्ना च वायुभिः।
जितात्मा योषितः षष्ठः षड़ाहुत्याहुतिं भवेत् ॥
जिह्वादत्तं ग्रसेदन्नं दन्तैश्चैव न तत् स्पृशेत्।
दशनैः स्पृष्टमात्रेण पुनराचम्य चारभेत् ॥
मुख माहवनीयोऽग्निर्गार्हपत्य स्तथोत्तरे।
उदये दक्षिणाग्निश्च ग्रहाग्निश्चापि दक्षिणे ॥
सभ्यश्चोत्तरतश्चान्य इत्यग्निस्मरणाक्रमः।
प्राणाप्येव हि होत्रादि चिन्तयेत्तद्वदेव तु ॥
होतारं प्राणमित्याहुरुद्गातारमपानकम्।
ब्राह्मणं व्यानमित्येके उदानाध्वर्युमित्यपि ॥
समानञ्चेह यज्वान मिति ऋत्विक् क्रमं बुधः।
अहङ्कारं पशुं कृत्वा प्राणञ्च पशुमित्यपि ॥
बुद्धिः प्रत्यरणिः पृथ्वी लोमानि च कुशाः स्मृताः।
मनोविभक्ता त्वग्जिह्वा इति तास्ते प्रचक्षते ॥
कृत्वा तु मातृमोङ्कारं ऊङ्कारञ्च तथा पुनः।
उत्तिष्ठज्ज्वनताग्रे च हरिल्लोहितपिङ्गलः ॥
सुप्तः परिधये तुभ्यं तुद्वद्धि दैवतञ्च यत्।
विजिह्वो यो जाठराग्नेः स्वाहा प्राणाय वात्ययः ॥

इन्द्रगोपककर्णाय विजिह्वायाग्निदैवतम् ।
ॐ स्वाहा अ ानाय स्वाहाकारान्त मुच्चरेत् ॥
गोक्षीरसमवर्णाय पर्जन्यवह्निदैवतम् ।
स्वाहोदानाय सोङ्कार मनलाय परार्चिषे ॥
तड़िल्समानवर्णाय वाय्वाग्निर्दैवतायते ॥
ॐ स्वाहाच समानाय ॐ स्वाहा चाह वेधसे ।
तर्जनीमध्यमाङ्गुष्ठै र्लग्नप्राणस्य चाहुतिः ॥
मध्यमानामिकाङ्गुष्ठै व्यानस्य परिकीर्तिता ।
कनिष्ठानामिकाङ्गुष्ठै रपानायाहुतिः स्मृता ॥
मध्यमानामिकाख्वन्या मुदाने जुहुयाद्बुधः ।
समाने सर्वैरुद्धृत्य आहुतिः स्यात्समानता ॥
जलं पीत्वा तु तृप्यन्ति रेचयञ्च शनैः शनैः ।
ततोऽन्यद्भव्यमश्नीयात् पूरणायोदरस्य च ॥
विधिं प्राणाग्निहोत्रस्य ये द्विजा नैव जानते ।
अपानेन तु भुञ्जन्ते तेषां सुखमपानवत् ॥
यो ज्ञात्वा तु विधिं भुङ्क्ते यथोक्त मिदमाचरेत् ।
इहामुत्र च पूज्यत्वं ब्रह्मभूयाय कल्पते ॥
त्रिःसप्तकुलमुद्धृत्य दातुरप्यक्षयं भवेत् ।
दातुरपि हि यत्पुण्यं भोक्तुश्चैव हि तत् फलम् ॥
दाता चैव तु भोक्ता च तावुभौ स्वर्गगामिनौ ।
यो जानाति विधिं चेमं स भवेद्ब्रह्मवित्तमः ॥
एकं पिवति गण्डूषं यजेदर्द्धं धरातले ।
पीतेन पितृतृप्तिस्तु भुमौ च भूमिदेवता ॥

पिबेद्द्वितीयं गण्डूषं ब्राह्मणो ज्ञानदुर्बलः।
स हतः पितृदैवत्य मात्मानं नरकं व्रजेत् ॥
रहस्यं सर्वशास्त्रेषु सर्वशास्त्रेषु दुर्बलम्।
ज्ञानाना मुत्तमं ज्ञानं न कस्यचित्प्रकाशयेत् ॥
ज्ञानानि च प्रकाश्यानि पुंसामविदुषां वदेत्।
स प्राणस्य फलं तेषा मात्मानं नरके नयेत् ॥
अश्नीयाद्विधिवन्न्यस्तपात्रः कृतपरीहृतः।
पूजितान्नमवाग्जुष्टः स पैशाच ममाक्षिकम्।
वाग्यतन्यस्तपात्रोऽपि त्रिग्रासान् पि वा द्विजः ॥
तस्य त्रिरात्रपुण्यस्तु दानेऽपि कवयोविदुः।
चतुस्त्रिकोणवृत्ता च विप्रक्षत्रविशां क्रमात् ॥
वदन्ति परिकृष्यन्ति तद्धीनान्नतु राक्षसम्।
गृह्णीयात्प्रागपोशानं तथा भुक्त्वा सकृन्नृपः ॥
अनग्न मच्छनं तत् स्यात् भक्तमन्नं द्विजन्मना।
काले भुक्त्वा समुत्थाय प्रोष्य विप्रं समीक्ष्य च ॥
अहःपतिन्तच स्थित्वा चिन्तयेद्बहुकृत्यकम्।
भार्य्या भोजनवेलायां भिक्षां सप्ताय पञ्च वा ॥
दत्त्वा शेषं समश्नीयात्मापत्यभृत्यकैः सह।
निवृत्य साऽपि सकलं किञ्चित् स्थित्वा सुखेन च ॥
स्वस्वीयकृत्यकार्य्येषु सापि सा त्वपरा पुनः।
उपास्य पश्चिमां सन्ध्यां कृत्वा चैवाशुशुक्षणिम् ॥
किञ्चित्पश्चात्समश्नीयात्सायं प्रातरिति श्रुतिः।
स्वाध्याय मभ्यसेत्किञ्चित् यामद्वयमथोति च ॥

शयानो मध्यमौ यामौ ब्रह्मभूयाय कल्पते ।
सुशयने शयीताद्ये एकान्ते च स्त्रिया सह ॥
सेवनं मैथुनादीनां वदन्ति मुनिपुङ्गवाः ।
ऋतुत्त्रयात् सुपुत्रार्थी आधानविधिना द्विजः ॥
प्रसह्य भस्मना योनि मितितन्त्रेति दर्शनात् ।
कृत्वाधानविधानन्तु स्त्रीयोग मभ्यसेत् पुनः ॥
मन्येदविकृतौ योनौ विकाराद्विकृताः प्रजाः ।
ब्रह्ममुहूर्त्तमुत्थाय प्रातःसन्ध्या मुपक्रमेत् ।
आसूर्य्योदयनात्प्रातः सायञ्चैवर्त्तदर्शनात् ॥
अनृतं मद्यगन्धञ्च दिवामैथुनमेव च ।
पुनाति वृषलस्यान्नं सन्ध्या वह्निरुपासिता ॥
सिन्दुरारुणाभं भाति यौवनं यौवतारति ।
उदयेऽस्तमये भानौ तावत्सन्ध्येति शक्तिजः ॥
आधानतो द्वितीयेतु मासे पुंसवने भवेत् ।
सीमन्तोन्नयनं षष्ठे कार्य्यं मासेऽष्टमेऽपि वा ॥
जातस्य जातकर्मादि विधिवच्छाद्धपूर्वकम् ।
दिने चैकादशनामकर्मादिवद्द्विजन्मनाम् ॥
तुर्यनिष्क्रमणं मासे षष्ठेऽन्नप्राशनं तथा ।
चूड़ाकर्म द्वितीयेऽब्दे कार्यं वा कुलधर्मतः ॥
सर्वं स्त्रियां विमन्त्रं तु कार्यं कार्यविमुक्तये ।
न स्वर्यस्य द्विजाः श्वेताः श्रियाश्चैव कथञ्चन ॥
स व्रात्यः स परित्याज्यो द्विजो यस्माद् द्विजन्मनाम् ।
मुञ्जमौर्वशणानान्तु त्रिवृता रशना स्मृता ॥

कार्पासशणमेषोर्णाभ्युपवीतानि त्रिवृंतिः ।
पालाशवटपीलूनां दण्डाश्च क्रमशः स्मृताः ॥
कार्ष्णं च रौरवं वास्त मर्जिनानि द्विजन्मनाम् ।
शिरोललाटनासान्तः क्रमाद्दण्डाः प्रकीर्तिताः ॥
अव्रणाः सत्वचो दग्धा उक्ताः शुभकरा नृणाम् ।
गायत्र्या त्रिष्टुप् जगत्या त्रयाणामुपनायनम् ॥
गायत्र्यामिव शेषौ वा युञ्ज्यादित्यपरेषु च ।
सवितुः पाठः सवितुर्विश्वारूपाणि चक्रमात् ॥
औपासनायिका मन्त्रा विप्रादीना मुदाहृताः ।
ब्रह्मणो विप्रगेहेषु नृपस्तेषूत्तमेषु च ॥
वैश्यो विप्रो नृपः स्वेष कुर्याद्भिक्षां स्ववृत्तये ।
एकान्नञ्च द्विजोऽश्नीयाद्ब्रह्मचारी व्रते स्थितः ॥
भिक्षाव्रतं द्विजातीनां उपवाससमं स्मृतम् ।
प्रतिग्रहो न भिक्षा स्यो न तस्याः परपाकता ॥
सोमपानसमा भिक्षा अतोऽश्नीत स भिक्षया ।
भिक्षया यस्तु भुञ्जीत निराहारः सउच्यते ॥
भिक्षामन्नाभिशस्तेषु साचारेषु द्विजेषु च ।
भिक्षेत भिक्षां क्रमशो गुरोः कुलं विवर्जयेत् ॥
स्वसारं मातरञ्चापि मातृस्वसारमेव च ।
भिक्षेत प्रथमां भिक्षां याचेतं न विमानयेत् ॥
भवति ! भिक्षां मे देहि भिक्षां भवति ! देहि मे ।
भिक्षां मे देहि भवति ! क्रमेणैतदुदाहरेत् ॥
द्वादशाब्दं व्रतं धार्य्यं षट् त्र्यब्दन्तु श्रुतिं प्रति ।
आदित्याब्दे व्रजेत्तद्वै दत्त्वा तु गुरवे वरम् ॥

त्रयस्तु स्नातकाः प्रोक्ताः विद्याव्रतोपसेविनः ।
विद्यां समाप्य स स्नायाद्विद्यास्नातक उच्यते ॥
समाप्य च व्रतं यस्तु व्रतस्नातक उच्यते ।
द्वयं समाप्य यः स्नायात्स विनामाभिधीयते ॥
अष्टैकद्वादशाब्दानि सगर्भाणि द्विजन्मनाम् ॥
मुख्यकालो व्रतस्यैष ह्यन्य उक्तो विपर्यये ॥
द्विगुणाब्देषु कर्त्तव्या क्रमादुपनतिर्द्विजे ।
हीनगायत्रीच व्रात्या उक्तकालादनन्तरम् ॥
नाध्येयो नैव चोद्वाह्यो व्यवहारविवर्जितः ।
न याज्यानार्चकार्य्येषु प्रयोज्यास्तु इति श्रुतिः ॥
क्लीववन्निर्लोमवक्त्रा ये निर्लोमदेहवक्षसः ।
उदरस्थानपत्याश्च अहृश्यास्ते विगर्हिताः ॥
येऽजस्रं विहितं कुर्युः प्राप्नुयुस्ते सदा शुभम् ।
दीर्घायुष्ट्वं प्रजावत्त्व मरोगित्वं यथोदितम् ॥
क्षीणायुष्यं दरिद्रत्व मप्रजत्वं सरोगिताम् ।
गर्हितत्वं च लोकेऽत्र विदुर्निषिद्धकारिणः ॥
प्रातर्वा यद्दिवा साय मद्यादन्नमनर्चितम् ॥
नानाज्यस्थानपोशानं शुभप्रेप्सु द्विजन्मनाम् ।
आपोशानं विना नाद्यान्नादद्यान्न मनर्चितम् ।
अनाज्यं न दिवा सायं शुभमिच्छन् समश्नुते ॥
षोड़शाब्दानि विप्रस्य द्वाविंशति नृपस्य च ।
चतुर्विंशतिरन्यस्य व्रात्यास्ते स्मरतः परम् ॥
उपनेया न ते विप्रैर्नाध्याप्याः शूद्रधर्मिणः ।
न व्यवहार्याश्चाप्यांश्च इति धर्मविदो विदुः ॥

स्त्रीणामुद्वाह एको वै वेदोक्तपावनो विधिः ।
स्त्रीपुंसोर्यत्र विन्यासः सुन्वोरन्योन्य मुच्यते ॥
स्वस्मिन्यस्माद्विभर्त्येषा पतिर्बिभर्ति सोऽपि ताः ।
अतो भार्या च भर्ता चेत्यत्र वेदो निदर्शनम् ॥
पतिर्विशति यज्जायां गर्भो भूत्वेह मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥
जातोक्ता तेन जाया वै यदस्यां जायते पुनः ।
इयमाभवनं भार्य्या वीजमस्यां निषिच्यते ॥
देवा ऋचुर्मनुष्याश्च भार्य्या तु जननी तु यः ।
आत्मना जायते ह्यात्मा सेरावत्यतितारिणीम् ॥
भार्य्या जाया जनन्येषा इति वेदप्रतिष्ठितः ।
यस्मात्त्रातिपुंनाम्नो नरकात् पुत्र उच्यते ॥
सर्वां संहृष्टिमाहृत्य तद्व्रतं ब्रह्मणैकताम् ।
यः पिता जातपुत्रस्य पश्येच्चेज्जीवतो मुखम् ॥
सर्वं मे सफलं प्राप्त मैहिकामुत्रकञ्च यत् ।
किं दण्डै रजिनैस्तीर्थैस्तपोभिः किं समाधिभिः ॥
पुमांसः ! पुत्त्रमिच्छध्वं स वै लोके वदावदः ।
प्राणान्नमुष्मिन् शरणं हि वासो रूपं हिरण्यं पशवो विवाहः ।
सखा च यज्वा कृपणश्च पुत्री ज्योतिः परम्पुत्र इहाप्यमुत्र ॥
स पुण्यकृत्तमो लोके यस्य पुत्रश्चिरायुषः ।
विशेषेण द्विधमंज्ञः स परं ब्रह्म विन्दति ॥
पुत्रेण प्राप्यते स्वर्गो जातमात्रेण तु ध्रुवम् ।
तस्मादिच्छन्ति सर्वेऽपि पशवोऽपि वयांसि च ॥
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ।

पुत्त्रस्यापि स पुत्त्रत्वं य स्त्राति नरकार्णवात्।
यः पिता स तु पुत्त्रस्तु जायैव हि जनन्यपि॥
न पृथक्त्वं विदुस्तज्ज्ञा अनयोः परयोरपि।
अयं हि पत्न्या पुरुषस्य तस्य ध्रुवं भवेत्पुत्त्रजन्मेह यस्य।
तद्वीक्ष्य चोर्ध्वं पशवो वयांसि पुत्त्रार्थिनो मातरमारुहन्ति॥
जनिष्यमाणा इच्छन्ति पितरः स्वकुले सुतान्॥
कश्चिद्गत्वा गयायां नोऽवश्यं पिण्डान् प्रदास्यति।
यजत्यन्योऽश्वमेधेन नीलं मोक्ष्यति गोगृहे॥
द्रष्टव्यं पितृभिः सर्वपुत्त्रेभ्यः सकलं फलम्।
अपुत्त्रशौर्यैकचित्तो वा आत्मा मोक्ष्यति गोगृहे॥
दानदो वा कुरुक्षेत्रे ज्ञानी वाथ भविष्यति।
पुच्छे शिरसि यः शुक्लः शुक्लपा लोहितं वपुः॥
देवाद्यभीष्टो नीले यः कृष्णः पावनो वृषः।
रक्तो वा यदि वा शुक्ल अनुविषाणः शुभेक्षणः॥
यो न हीनातिरिक्ताङ्गस्तं वा वृषं समुत्सृजेत्।
दुहितापि तथा साध्वी श्वशुरयोः सर्पाद्रक्षत्॥
पतिव्रता च धर्मज्ञा अपि दुर्गतिकृद्भवेत्।
यः पिता स च वै पुत्त्रस्तत्समा दुहितापि च॥
पुत्त्रश्च दुहिता चोभौ पितुः सन्तानकारकौ।
तत्सुतः पावयेद्वंशान् लोकान् मातामहादिकान्॥
दौहित्रः पुत्त्रवत् स्वर्गं उक्तौ शास्त्रैश्च तौ समौ।
आधानादिकसंस्काराः प्रोक्ताश्चैव द्विजन्मनः॥
कर्त्तव्याश्च स्वशाखोक्ताः केचित् कुलक्रिया च।

चत्वारिंशच्च ते सर्वे निषेकाद्याः प्रकीर्तिताः ॥
मन्त्रदीक्षा च विविधा तथैवान्येष्टिकर्म च ।
कुलाचारोऽपि कर्त्तव्य इतिशास्त्रविदो विदुः ॥
देशाचार स्तथाधर्म इति प्राह पराशरः ।
अयं हि परमो धर्मः सर्वेषामिति निश्चयः ॥
हीनाचारश्च पुरुषो निन्द्यो भवति सर्वशः ।
क्लेशभागीच सततं व्याधितोऽल्पायुरेव च ॥
आचारे व्यवहारे च दुराचारो विपर्ययः ।
नृणामाचारतो धर्मः स्यादधर्मो विपर्ययात् ॥

आचारवन्तो मनुजा लभन्ते आयुष्यवित्तं च सुतश्च सौख्यम् ।
धर्मं तथा शाश्वतमीशलोक मत्रापि विद्वज्जनपूजिताश्च ।
वेदाः सहाङ्गैः स पुराणविद्याशास्त्राणि वेद्यानिच तद्विहीनम् ॥
कुर्युर्नवैतानि च संस्मृतानि नरं पवित्रं प्रवदन्ति वेदाः ।
येऽधीतवेदाः क्रियया विहीना जीवन्ति वेदैर्मनुजाधमास्तान् ॥
वेदास्त्यजेयु र्निधनस्य काले नीडं शकुन्ता इव ज़ातपक्षाः ।

आचारहीननरदेहगतास्च वेदाः
शोचन्ति किन्नु कृतवन्त इतिस्म चित्ते ॥
यं नो भवेद्वपुषि चास्य शुभप्रहीणो
स्यानन्तदत्र भतबन्धननाशकर्त्ता ।

कर्त्तव्यं यत्नतः शौचं शौचमूलं द्विजातयः ।
शौचाचारविहीनानां सर्वाः स्यु र्निष्फलाः क्रियाः ।
तत्सुद्धि र्द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा ।
विण्मूत्रशोधनं बाह्यं चित्तशुद्धिस्तथान्तरम् ।

गन्धलेपायनं च त्वं शौचमाङ्कर्मनीषिणः ॥
मृद्भिरद्भिर्निलयस्य तत्कर्त्तव्यं द्विजातिभिः।
भावशुद्धिपरं शौच माङ्कराभ्यन्तरं बुधाः ॥
यस्य पुंसस्तु यच्छौचं शौचैस्तप्यं किमन्यकैः।
वाङ्मनोजलशौचानि यशः सदा द्विजन्मनाम् ॥
त्रिभिः शौचैरुपेतो यः स सर्गो नात्र संशयः।
स्त्रियं रिरंसुर्द्रविणं जिहीर्षुर्वधश्चिकीर्षुर्मनुजः परस्य।
विवक्षुरत्यन्तमवाच्यवाचं कथं स शुद्धिं समुपैति शौचात् ॥
किं निकामस्य नारीभिः किं गतासोश्च सम् द्विजैः।
यतेन्द्रियस्य किं शौचै निष्फलं। मुर्खदानवत् ॥
न गतिर्मूर्खदानेन न तारोऽम्बुनि चात्मनः।
तस्मात्तस्य न दातव्यं सह दात्रा स मज्जति ॥
यथा भस्म तथा मूर्खो विद्वान् प्रज्वलिताग्निवत्।
होतव्यञ्च समिद्धाग्नौ जुहुयात्को नु भस्मनि ॥
यथा शूद्रस्तथा मूर्खो शूद्रश्च भस्मवत् तथा।
शूद्रेण सह सर्व्वेषं मूर्खे दानं विवर्जयेत् ॥
गृहीता च तावद्विद्वान् तद्दाता रोहको यथा।
आत्मानं तारयेत्तञ्च नदीं वैतरणीं द्विजः ॥
यो मूर्खो विशदाचारः षट्कर्माभिरतः सदा।
स नयन् स्वर्ग मात्मानं वृद्धांश्चैव न पीड़येत् ॥
न विद्यते तयोर्यस्य अददञ्च प्रतिग्रहम्।
अददानः स दातारमात्मानं मप्यधो नयन् ॥
हेम भूमिं तिलान् गाश्च अविद्वान् हि ददाति यः।

भस्मीभवति सोऽज्ञाय दातुः स्यान्निष्फलं भवेत् ॥
तस्माद्ददति नो दद्यादल्पयोऽपि प्रतिग्रहम् ।
विषतत्त्वापरिज्ञानी विषेणाल्पेन नश्यति ॥
सर्वं गवादिकं दानं पात्रे दातव्य मर्चितम् ।
विद्वद्भिर्न त्वपात्रे तु गतिमिच्छद्भिरात्मनः ॥
हस्तिकृष्णाजिनाद्यास्तु गर्हिता ये प्रतिग्रहाः ।
महिमास्तान्न गृह्णीयु गृह्णन्त स्तु पतन्ति ते ॥
कृष्णाजिनप्रतिग्राही हयानां शुक्रविक्रयी ।
नवश्राद्धस्य भोक्ता च न भूयः पुरुषो भवेत् ॥
यो गृह्णाति कुरुक्षेत्रे मार्गे गां द्विमुखीं गजम् ।
नवश्राद्धान्नभुक्तश्च वर्ज्या निर्माल्यवद्द्विजाः ॥
एते यान्त्यन्धतामिस्रं यावच्चानुसहस्रकम् ।
विष्णोश्च वह्नेश्च रवेश्च जाता
पृथ्वीच येयञ्च मुनिश्च गौश्च ।
कालेच पात्रे विधिना प्रदत्तः
प्राप्नोति लोको नियमे तदुक्तम् ॥
वेदाविद्वान् सदाचारः सदा वसति सन्निधौ ।
भोजने चैव दाने च वर्जनीयो न सत्तमैः ॥
अत्यासन्नमधीयानान् ब्राह्मणान् यो व्यतिक्रमेत् ।
भोजने चैव दानेच हिनस्त्यासप्तमं कुलम् ॥
अनृचोऽपि निराचाराः प्रतिकाशिनिवासिनः ।
अन्यत्र हव्यकव्याभ्यां भोज्यास्ते वत्सवादिषु ॥
प्रोक्ताप्रतिग्रहाभावे प्राप्तार्थां बृहदापदि ॥

विप्रोऽश्नन् प्रतिगृह्णन्वा यतस्ततोऽपि नाघभाक् ॥
गुर्वादियोग्यवर्गार्थं दैवाद्यर्थञ्च सर्वतः।
प्रत्यादद्यात् द्विजाग्र्यस्तु भृत्यर्थमात्मनोऽपि च ॥
दधिक्षीराज्यमांसानि गन्धपुष्पाम्बुमत्स्यकान्।
शय्यासनाशनं शाकं प्रत्यक्षं यं नहि क्वचित् ॥
अपि दुष्कृतकर्मभ्यः समादद्यादयाचिता।
पतितादिस्तदन्येभ्यः प्रतिग्राह्यमसंशयम् ॥
शक्तः प्रतिगृह्णीतु यो वेदवृत्तस्तु संवृतम्।
लभ्यमानं न गृह्णाति स्वर्गस्तस्य सुनिश्चितः ॥
प्रतिग्रहस्पृशां वापि याचितं यो न यच्छति।
तत्कोटिगुणशस्तोऽसौ स्मृतो दासत्वमृच्छति ॥
दाता च यः स्मरेद्दानं प्रतिग्राही न पात्यते।
उभौ तौ नरकं यातो दाता चैव प्रतिग्रही ॥
अपात्रस्य हि यद्दत्तं दानं स्वल्पमपि द्विजः।
गृहीता तत्क्षणाद्याति भस्मत्वञ्चाप्यवारितः ॥
वदन्ति कवयः केचिद्दानप्रतिग्रही प्रति।
प्रत्यक्षलिङ्गमेवेह दातृयाचकयो रतः।
दातृहस्तो भवेदूर्द्ध्वं मधस्तिष्ठेत्प्रतिग्रही।
दातृयाचकयोर्भेदो हस्ताभ्यामेव सूचितः ॥
सूनादीनाञ्चतुर्वर्णां तथा निन्दितभूयते।
न विद्वान् प्रतिगृह्णीयात्प्रतिगृह्णन् व्रजत्यधः ॥
पुष्टो दशगुणं पूर्वात् सुनिश्चयमधाधिकृत्।
वैश्यो निषिद्धनृपतिप्रतिग्राही परे क्रमात् ॥

परपाकं वृथामांसं देवानामृषिदूषितम्।
अनुपाककृतं चैव तथा मांसञ्च नादिकम्॥
न भोक्तव्यमभोज्यान्नं कन्दमूलादिकञ्च यत्।
न पातव्यं न पेयञ्च द्विजैरन्नं न गर्हितम्॥
सत्यमुक्तः सदा ब्रूयाच्छनैर्धर्मं समाचरेत्।
यमान् स नियमान् कुर्य्याद्गार्हस्थं व्रतमाचरेत्॥
मातृपितृउपाध्यायान् गुरूंस्त्विमान् सदार्चयेत्।
एतान् श्रेष्ठान् तथाचान्यान्नित्यं विप्रोऽभिवादयेत्॥
दमञ्च सर्वदा कुर्य्याद्दानं दद्याच्च सर्वदा।
दयाञ्च सर्वदा कुर्य्यात्तद्विना नरकाश्रयः॥
दाम्यन् स सर्वदात्मानं दाम्ययन्तु सदा द्विजः।
दयध्वमिति वै वेश्याः! श्रुतिर्वाजसनेयिकी॥
यत्त्रिधा कारकं कुर्य्यात् स्तनयित्नुध्वनिर्दिवि।
ददेद्वेति दमं दानं दयामिति च शिक्षयेत्॥
रसारसैः समा ग्राह्या देया अपि च नान्यथा।
न रसैर्लवणं ग्राह्यं समतो हीनतोऽपि वा॥
तिला अपि समा देया यस्मात् अपिच नान्यथा।
अपीड्यानि न यन्त्रेषु ब्रूयुरेतन्मनीषिणः॥
विक्रयं व्यपदेशेन दुग्धदध्यादिसर्पिषम्।
शुश्रूषां न तिरस्कुर्य्यादुपासां नावधीरयेत्॥
न निन्द्यांश्च समाभ्यर्च्यान्न विक्रीणीत गर्हितान्।
अदेयानि नवै दद्यादत्याज्यानि न वै त्यजेत्॥
अभाष्यं नैव भाषेत्र होमाङ्गाद्यांश्च न क्षिपेत्।

न संवदेच्च पित्राद्यैः पतिताद्यैर्न संविशेत् ॥
न मतिं नीचवर्णाय दद्यादुच्छिष्टमेव च।
मतिं शूद्रस्य यो दद्याद्येचैनं पर्युपासते ॥
न किञ्चित्तस्य चादेयं व्रतादिनियमादिकम्।
आचक्षाणस्तु तद्धर्मं नरकाग्नौ प्रपच्यते ॥
नाद्यादन्नं निषिद्धस्थं स्वप्याद्वा नाङ्घ्रिरात्रिषु।
वेदविद्याविताननि विक्रीणीत न कर्हिचित् ॥
नापात्यानि रसाद्यानि भूङ्क्तिश्चान्वयेऽपि च।
नापच्येत्तु स्वपाणिभ्यां न च कण्डूतिकृद्भवेत् ॥
पादुका नच पालाशा न वृक्षादिनिकृन्तनम् ॥
नोत्सृज्यं ष्ठीवनाद्यञ्च कदाचिद्वै गवादिषु।
पद्भ्यां स्पृश्यो गवाघ्रातो नोच्छिष्टो न च तद्गतिः ॥
न लङ्घ्या वस्त्रतन्त्वादि वाय्वग्न्यो नान्तरा गतिः।
न द्वयोर्विप्रयोर्नाग्न्योः सौरभेयोः पतिस्त्रियोः ॥
न विप्राग्न्योर्विप्रपिण्डो नो ग्राह्यो विष्णुतार्क्ष्ययोः।
सौरभेयोर्जलाग्न्योश्च माहेयीजलयोरपि ॥
भानुव्योमादिकानान्तु न कुर्य्यादन्तरागतिम्।
भोजनादिषु नासक्तां पश्येन्न विगतांशुकाः ॥
न गच्छेत् स्त्रीं रजोयुक्तां न च तया सहास्नुयात्।
उत्तरीयं विना नैव न नग्नो न शयीत च ॥
न गेहे चैव मार्गादौ न निषिद्धककुम्मुखः।
नापगाङ्गेयचर्यादि नचविष्ठा गृहान्तिके ॥
अतिकालातियानि च शुभमिच्छन्विसर्जयेत्।

यस्येन्द्रचापभद्राद्या मूलनाम्ना न निर्दिशेत्।
इन्द्रचापं ध्यायन्ति ये न खातव्याः परस्य ते।
वर्जयेद्वादनञ्चैव पादयोः कांश्यभोजने॥
पैशुन्यं मर्मभेदञ्च न वदेन्म्लेच्छभाषितम्।
प्राकृतं वक्रशास्त्राणि पाषण्डहेतुकानि च॥
न करं मस्तके दद्यान्मस्तके न करं तथा।
न जातु नो शिरोधार्य्यं न प्राष्टत्तशिरा भ्रमेत्॥
वैनाश्च वस्त्रस्य कदर्यचौराः क्लीवाभिशस्तागणिकासु जातु।
यो वृत्तजीवी गणदीक्षका ये तेषां न भोज्यं ह्यशनं द्विजातैः॥
क्रुरातुरा वृत्तचिकित्सकाश्च या पुंश्चली यौ च विरुद्धशत्रू।
व्रात्याश्रमत्ता अबला जिताश्च अग्राह्यमेषामशनं द्विजस्य॥
ये दाम्भिका येच सुवर्णकारा उच्छिष्टभोजी पतितश्च यश्च।
ये पुत्रभार्या बहुयाचका ये विप्रस्य नैकेऽपि न भोज्यमन्नम्॥
यः सोमशस्त्रं सुकृताम्बुचक्रं क्षीराज्यमांसं लवणाजिनानि।
क्षौमाज्यलाक्षाञ्च तिलान् फलानि एषां न विक्रीत कदन्नमाद्यम्॥
जीवन्ति नित्याश्चरसान्वयानां कर्माच कार्य्येऽपि च तन्तुवायाः।
राजा नृशंसो रजकःकृतघ्नो भोज्यन्न तेनैव च हिंसकाश्च॥
ये चैलधाराश्च सुराकृता ये शून्यं न वाचोह्यनृतं वदाश्च।
ये बन्दिनो येऽपिच याचकाश्च विप्रस्य चैतेऽपि न भोज्यशस्याः॥
मध्वाशनमधूच्छिष्ट दधिक्षीररसोदनः।
मनुष्यः फलपूजाश्च कुशवत् पुष्पवीरुधः॥
कोश्येयकेशकुतपा नीरं विषं रसस्तथा।
शाके कुशकपिण्याक गन्धनौषधिमूलकाः॥

विक्रीणन्ति य एतानि वस्तूनि मनुजाधमाः।
तेषामन्नं न भोक्तव्यन्तयोपपत्तिवेश्मनः॥
यो बद्धस्य कदर्यस्य भुञ्जीतान्नं द्विजाधमः।
तद्भ्रुणानद्रवत्म स्यान्मृतो विट्शूकरो भवेत्॥
योऽन्नं वार्धुषिकस्यापि जातापत्यादिकस्य च।
अन्यस्यापि निषिद्धस्य सोऽनन्तं नरकं व्रजेत्॥
पाणिग्टहीतभार्यायां सत्यां यस्तु नराधमः।
शूद्रीहस्तेन यो भुङ्क्ते पतितः स सदैव तु॥
त्यक्ता ये नोढभार्यान्तु त्यक्तः स पितृदैवतैः।
देवादित्यक्तः पापीयान् शूद्रादप्यधिकः स्मृतः॥
यः शूद्रीं भजते नित्यं शूद्री तु ग्टहमेधिनी।
वर्जितः पितृदेवैस्तु रौरवं यात्यसौ द्विजः॥
यः शूद्रायाञ्च स्वयं जातो ह्यन्यस्यां सोऽपि तत्पुनः।
अन्यस्याञ्च पुनः सोऽपि किन्तस्य प्रेत्य चिन्तनम्॥
सर्वान् भुञ्जीत नरकान् विंशतिं त्वेकवर्जितान्।
रौरवादीन् क्रमेणैव पापिष्ठो यावदन्तरम्॥
हेमन्तशिशिरत्वोश्च प्रोष्ठपद्या परस्य च।
पञ्चत्वपरपक्षेषु कार्य्या साग्निभिरष्टका॥
हेमन्तशिशिरे चैका एकैकाथ तथापरा।
प्रोष्ठपद्या द्विजास्तिस्रो ह्यष्टका इति केचन॥
दर्शश्च पौर्णमासश्च तथैवाग्रहायणद्वयम्।
चतुर्मासीव्रतान्येव कार्याणि साग्निकैर्द्विजैः॥
अनूचानः क्रतं कुर्युः सदैव व्रतचारिणः।

अग्निहोत्ररता नित्यं मातापित्रादिपूजकाः ॥
प्रतिग्रहनिवृत्ताश्च जपहोमपरायणाः ।
वृत्तवन्तश्च ये विप्राः स्नातकास्ते प्रकीर्त्तिताः ॥
संक्रान्तिरर्कवारश्च व्यतीपातो युगादयः ।
शुभर्क्षदिनयोगाश्च कार्य्या साग्निभिरष्टका ॥
न शूद्राय भिक्षेरे नैतत् कर्त्तव्यं कर्म च द्विजैः ।
चण्डालत्वमवाप्नोति यज्ञार्थं शूद्रयाचकः ॥
लब्धं यज्ञाय स विप्रो न दद्याद्यज्ञकर्मणि ।
स वायसोऽथ वा गृध्रः काकोवाथ प्रजायते ॥
शिलोञ्छवृत्तिर्विप्रस्य तथा चैकाह्निकाशनः ।
त्र्याहाह्निकाशनो वा स्यात् कुम्भीकुशलधान्यकः ॥

---

पूर्वं पूर्वतरः श्रेयानेषां सद्भिः प्रकीर्त्तितः ।
सोमपः स्यात्त्रिवर्षान्न तत्पूर्वक्रतुमाशनः ॥
सोमेष्टिंपशुयज्ञञ्च कुर्य्याच्च प्रतिवासरम् ।
इष्टिर्वैश्वानरी यातु कर्त्तुर्वै तदसम्भवेत् ॥
सत्यामर्थस्य सम्पत्तौ न कुर्य्याद्धीनदक्षिणाम् ।
तत् क्रतञ्च भवेद्व्यर्थं प्राप्नुयात्पशुयोनिताम् ॥
श्रद्धापूतञ्च दातव्यं पात्रे दानं समर्चितम् ।
याचितेऽपि हि दातव्यं पूतं स्वश्रद्धया धनम् ॥
शूद्रान्नं ब्राह्मणोऽश्नन्वै मासं मासार्द्धमेव च ।
तद्योनावभिजायेत सत्यमेतद्विदुर्बुधाः ॥
आशूद्रस्यादशूद्रान्नो मृतश्चैवोपजायते ।
द्वादशं दश वाष्टौ च गृध्रशूकरपुष्कलः ॥

उदरस्थितशूद्रान्नो ह्यधीयानोऽपि नित्यशः।
जुह्वन्वापि जपन्वापि गतिमूर्ध्वां न विन्दति॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम्॥
तस्माच्छूद्रं न भिक्षेरन्यज्ञार्थं सद्द्विजातयः।
श्मशानमिव तच्छूद्रस्तस्मात्तं परिवर्जयेत्॥
कणानामथ वा भिक्षां कुर्याच्चेद्वृत्तिकर्शितः।
स शूद्राणां गृहे कुर्वन् न तत्पापेन लिप्यति॥
विशुद्धान्वयसञ्जातो निवृत्तो मांसमद्ययोः।
द्विजभक्तिर्वणिग्वृत्तिस्तच्छूद्रः संप्रकीर्तितः॥
उदक्यास्पृष्टसंस्पृष्टं वीक्षितं वाप्युदक्यया।
स्वस्पृष्टं शकुनोत्सृष्टं प्रयत्नेन विवर्जयेत्॥
उच्छिष्टञ्च पदा स्पृष्टं शुक्तञ्च पतितेक्षितम्।
पर्युषितञ्च विट्कास्थं केशकीटाद्युपाहितम्।
पत्युच्छिष्टं गवाघ्रातं प्रयत्नेन विवर्जयेत्॥
नाश्नीरन्नेतदशनं सामिषन्तो द्विजातयः।
शूद्राणामपि भोज्यान्नाः स्युर्दासनापितादयः॥
सस्नेहमशनंभोज्यं चिरस्थमपि यद्भवेत्।
अनुक्ता अपि भोज्याः स्युः सद्यस्केता यवादयः॥
गर्भिण्या वत्ससुभयागवादे वर्जयेत्पयः।
स्त्रीणामेकशफोष्ट्रीणां तथारण्यकमाविकम्॥
प्रसूता ब्राह्मणी गौश्च महिष्याजा स्तथैव च।
दशरात्रेण शुद्धेत भूमिष्ठं च नवञ्जलम्॥

शाकादिकञ्च विट्जातं कवचानि च वर्जयेत् ।
मांसंकीटादिभिर्जुष्टं प्रयत्नेन विवर्जयेत् ॥
एवं ये क्रव्यमश्नन्ति तथा विष्ठाभुजश्च ये ।
शुकटिट्टिभदात्यूहान् कपोतपिकसारिकाः ॥
सेधाद्यान् पञ्च षट् पञ्च सिंहाद्यान्मत्स्यकांश्च षट् ।
धर्मशास्त्रोदितानद्यात् सर्वाकारांश्च वर्जयेत् ॥
भक्ष्यमाणां स्त्यजेन् मांसं श्राद्धयज्ञोत्सवेष्वपि ।
कृत्वा च विधिवत् श्राद्धं नाद्यमतिथिनामिषम् ॥
यदैवाव्ययसम्पत्तिस्तदैवामन्त्रयेद्द्विजान् ।
कृत्वाच विधिवत् श्राद्धं पश्चात् तत् स्वयमश्नुयात् ॥
नाद्यादविधिना मांसं मृत्युदिष्टेऽपि धर्मवित् ।
भक्षयन्नरके तिष्ठेत्पशुलोमसमाः समाः ।
गृहस्थोऽपि हि यो नाद्यात्पिशितन्तु कदाचन ॥
स साक्षान्मुनिभिः प्रोक्तो योगी च ब्रह्मलोकगः ।
न स्वयञ्च पशुं हन्याच्छ्राद्धादिक उपस्थिते ॥
क्रव्याद्यैः सारमेयाद्यैर्हृतं मृगादिमाहरेत् ।
एतच्छाकवदिच्छन्ति पवित्रं द्विजसत्तमाः ॥
समर्थो यस्य यस्तु स्यादन्नं दत्त्वा तु देहिनाम् ।
सतामिति निरातङ्को लोमहृष्टं निगद्यते ।
अन्नादेरपि भक्ष्यस्य स्नेहमद्यामिषस्य च ॥
महाफलानि वृत्तौ स्यात् प्रवृत्तिः स्वर्गसाधना ।
एकोऽष्टशतमश्वेन यजेत पशुना द्विजः ।
अन्योन्यं मांसमश्नाति स्वर्गप्राप्तिस्तयोः समा ॥

हेम राजन् ! शङ्खकस्य ताम्रस्य वैणवस्य च।
चर्मणोरज्जुवस्त्राणां शुद्धिर्जायेत वारिणा॥
तदादियज्ञपात्राणां धान्यानां वाससामपि।
अन्येषां जयरूपाणां प्रोक्षणाच्छुद्धिरिष्यति॥
मार्जनाद्यज्ञपात्राणां हस्तेन यज्ञकर्मणि।
अम्भोगे यत्र कैत्रणैः शुद्धेतां कौषिकाविकेः॥
श्रीफलैरंशुपट्टानां सारिष्टैः कुतपस्य च॥
स्वल्पमयानि पुनः पाकैः चौमाणि सितसर्षपैः।
शुद्धेत कारुहस्तस्थं पण्यं यत् स्यात्प्रसादितम्॥
भैक्षञ्च प्रक्षोणाच्छुद्धेत् पिष्टिः साक्षान्नयस्य तु।
स्त्रीमुखञ्च सदा शुद्धं भूमिर्लेपविवर्जिता।
अपरा दहनाद्यैश्च गृहं मार्जनलेपनैः॥
द्रवद्रव्याणि शुध्यन्ति वह्निना प्लावनेन च।
क्रव्यादाद्यात् हृतं मांसं सर्वदा शुचि कीर्तितम्॥
तृप्तिकृत् सौरभेयाय स्वभावात् सङ्कदा मतिः।
वदन्ति सूरयो वारि पवित्रमिति सर्वदा॥
गौर्वह्निश्च वनच्छाया जलमग्ना वसुन्धरा।
विप्रुषो मक्षिकानाञ्च न दुष्यन्ति कदाचन॥
शुतिः प्रस्थापने वत्सः अजाश्वौ मुखतस्तथा।
न तु गौर्मुखतो मेध्या न कस्य मुखजा मलाः॥
सोमभास्करयो र्भाभिः पथशुद्धिः प्रकीर्तिता।
ओष्ठाधरौ श्मश्रुकरौ सक्लेदौ भोजनादनु॥
न दुष्येच्चरुजः प्राङ बालवृद्धौ स्त्रियोर्मुखम्।
स्नात्वा पीत्वा च भुक्त्वा च सुप्त्वा तप्त्वा तथैव च॥

गत्वा रथ्यादिके चैव शुद्धिराचमनेन तु ।
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा ॥
न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ।
पद्माश्मलोहफलकाष्ठ चर्मभाण्डस्य तोयैः ॥
स्वयमेव शौचात् पुंसां निशास्वध्वनि निःसहायम् ।
न स्त्रीणाञ्च सदा शुद्धिर्विहिता च सतामपि ॥
नभसः पञ्चदश्यां तु पञ्चम्यां च तथापरे ।
नभसस्य चतुर्दश्या मुपाकर्म यथोदितम् ॥
तद्विदः केचिदिच्छन्ति नभसः श्रवणेन तु ।
हस्तेन वाथ पञ्चम्या मध्यायानां वदन्ति तत् ॥
यत्र शाखोपवीतः स्याद्ब्रह्मचारी द्विजोत्तमः ।
तच्छाखा विहितं तस्य उपाकर्मादि कीर्त्तने ॥
अतो वेदाधिकारत्वं वेदपाठस्य कीर्त्तने ।
अनुपाकृतविप्रादेर्वेदाध्ययन दुष्कृतम् ॥

मुञ्जोपवीताजिन दण्डकाष्ठम्
त्याज्यं न तत्सग्राद्व्रतचारिणा मपि ।
अक्लिष्टमेकोहतलोपपापम्
संस्कारमन्यं न पुनर्नयेयुः ॥

ओषधीनां तु सद्भावे स्वशाखाविहितन्तु तत् ।
रोहिण्या च सहस्यस्य उपाकर्माणि कुर्वते ॥
न भवेदनुपाकर्म ब्राह्मणः स्नातको व्रती ।
कर्मच्युतो भवेद्व्रात्यो व्रात्यानिष्कृतिकः शुचिः ॥
तथा तत्स्यादनध्यायो मृतगुर्वादिषु त्र्यहम् ।
मित्रकादिष्वहोरात्र मधीत्यारण्यकः शुचिः ॥

अष्टकासु तथाष्टम्यां पौर्णमास्यां शशिक्षये ।
मन्वादौ युगपद्यादौ विन्दुपातात् क्षयेऽपि च ॥
चतुर्मासि द्वितीयायां चतुर्दश्यामहर्निशम् ।
अहोरात्रे नृपे संस्थे व्रतिनि श्रोत्रिये यतौ ।
अत्र त्र्यहमनध्याय मिच्छन्ति चापरे त्र्यहम् ॥
अशौचस्तूतकान्तं च यावच्छुद्धिस्तयोर्भवेत् ।
देशान्तरगते प्रेते श्रुतेऽपि स्यादहर्निशम् ॥
गुर्वादौ वा नृपत्यादौ इति वाशिष्ठजोऽब्रवीत् ।
प्रतिग्रही त्वहोरात्रं भुक्ता श्राद्धकमेव च ॥
तज्ज्ञा ब्रूयुरनध्याय मृतुसन्धा वहर्निशम् ।
यज्ञादौ च त्र्यहो भोक्ता त्वहोरात्रा विदुर्बुधाः ।
अकाले वा हते वृष्टिवह्निदा येच रूमगाः ।
ग्रामेषु दुःखितानाञ्च खरादीनाञ्च निःस्वने ॥
पतितश्वावशूद्रान्त्यसन्निधाने न कीर्त्तयेत् ।
आत्मन्येव शुचौ देशो विद्युत्स्तनितरोहिते ॥
वधे च कलहे देशविप्लवे लोकविग्रहे ।
पांशुवर्षेऽम्बुमध्ये च दिग्दाहग्रामदाहयोः ॥
नीहारे च भवेद्विद्वान् सन्ध्ययोरुभयोरपि ।
आर्त्तस्य न पठेद्विद्वान् पूतिगन्धेतयैव च ।
विशिष्टेचागते गेहे गात्रास्तृक्निर्गमे तथा ॥
भोजनायोपविष्टस्य ह्युच्छितस्याद्र पाणिनः ।
वान्ते चान्ते तथा जीर्णे महापात्रेऽतिमारुते ॥
राजा वृषौ च यानादौ आरूढस्य तथा द्विजः ।
एतानन्यांश्च तत्कालान् अनाध्यायान्विदुर्बुधाः ॥

यो वर्जयेदनध्ययान्वेदाध्ययनकृद्द्विजः ।
भवन्ति तस्य सफला वेदाः मोक्षफलप्रदाः ॥
येच तेषु पठन्त्यज्ञाः पाठलोभेन लोभिताः ।
न शाश्वता भवेद्विद्या निष्फला च तथा द्विजः ॥
यः पठेद्विधिवद्वेदान् तत्प्रतीन्द्रियसंयमी ।
ब्रह्मत्वमिह लोकेऽपि ऐश्वर्यसुखभाक् भवेत् ॥
जनानां शृण्वतां यस्तु मार्गे गच्छन् पठेद्द्विजः ।
निष्फलास्तस्य वेदाश्च वेदविप्लवदोषभाक् ॥
यः पठेत् स्वरहीनन्तु लक्षणेन विवर्जितम् ।
सङ्कीर्णग्राममध्ये तु संभवेत् वेदविप्लवी ॥
ये स्वाध्यायानधीयीरन् अनध्यायेषु लोभतः ।
वज्ररूपेण ते मन्त्रा स्तेषां देहे व्यवस्थिताः ॥
नाक्रामेदमरादीनां च्छायां तथा परस्त्रियः ।
वान्तष्ठीवनविण्मूत्र कार्पासास्थिकपालिकाम् ॥
तानश्रेयाः स्पृश्य दिग्वाससगान् स्पृशेयु र्द्विजाः ।
श्रियं कामं च मा काङ्क्षेन्नस्पृशेन्मर्म कस्यचित् ॥
नित्यं वर्त्तेत चाजस्रं धर्मञ्च नित्यमर्जयेत् ॥
न किञ्चित्ताड़येद्धीमान् सुतं शिष्यञ्च ताड़येत् ।
ताड़येन्नाभितोऽधस्तान्नत्तानन्यत्र ताड़येत् ॥
आचारेण सदा विद्वान् वर्त्तते यो यतेन्द्रियः ।
स ब्रह्म परमाप्नोति चारण्येऽमुत्र चेह च ॥
आचारमूलं श्रुतिशास्त्रतत्त्वं आचारनाशान्न तदुक्तकृत्यम् ।
आचारपर्णानि हि वाग्मिगीगोत् वाचारपुष्पाणि यशोधनानि ॥
आचारवृक्षस्य फल हि नाकस्तस्माञ्च सुस्वादुरसश्च मुक्तिः ।

तस्मादनन्तं फलदन्तु तत्त्वमाचारमेवाश्रय यत्नपूर्वम् ॥
ये धर्मशास्त्रे विहिताश्च केचिद्धर्मा द्विजाग्र्योरपि तेच सर्वे ।
यत्नेन कार्या पितृदेवभक्तैः श्राद्धानि कार्याख्यथ तानि वक्ष्ये ॥
यत्नेन धर्मा गृहमेधिविप्रैः प्रीतेन वाचा वपुषा च कार्यः ।
आयुः प्रजा श्री र्भुवि पूजितत्वं तस्माल्लभन्ते दिवि देवभोगान् ॥

इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां धर्मसंहितायां चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

आवृश्चन्द्रावचन्द्रे भच्छायाग्रहणसंक्रमे ।
व्यतीपातविषुवत् क्षयपक्षपातार्धलब्धिषु ॥
अष्टका नयने द्वे च श्राद्धं प्रति यदा रुचिः ।
पुण्यः श्राद्धस्य कालोऽयमृषिभिः परिकीर्तितः ॥
युगादिषु च कर्त्तव्यं मन्वन्तरादिकेऽपि च ।
श्राद्धकालोह्ययं प्रोक्तो मन्वाद्यैर्धर्मकर्तृभिः ॥
नवान्नं नवोदकञ्चैव नवच्छन्नं तथा गृहम् ।
नाश्नीयु र्येषु चेहन्ते पितरो हि यमास्तव ॥
काणः पौनर्भवो रोगी पिशुनो वृद्धिजीवकः ।
कृतघ्नो मत्सरी क्रूरो मित्रध्रुक् कुनखोऽगुदः ॥
विच्छिन्नप्रजननश्खिलीश्यावदन्तावकीर्णिनः ।
हीनाङ्गश्चातिरिक्ताङ्गो विक्लवो परनिन्दकः ॥
क्लीबोऽभिशस्तवाक् दुष्टश्रुतकाध्यापकस्तथा ।
कन्यादूषी वणिग्वृत्तिर्विनग्नः सोमविक्रयी ॥

भार्याजितोऽनपत्यश्च कुण्डाशी कुण्डगोलकः ।
पित्रादित्यागकृत्तेन वृषली पतितस्तु ॥
अनुक्तवृत्तिस्तन्मातः परिपूर्वापतिस्तथा ।
अजापालो माहिषिकः कर्मदुष्टाश्च निन्दिताः ॥
योऽसत्प्रतिग्रहग्राही यश्च नित्यं प्रतिग्रही ।
ग्रहसूनकदूतौ च पितृश्राद्धेषु वर्जिताः ॥
एकादशाहे भुञ्जन्तः शूद्रान्नरससंयुताः ।
गुरुतल्पगो ब्रह्मघ्नो दस्यु चोपपति र्गृहे ॥
प्रेतस्पृक् चैवनिर्नैक्ता चोपयाचकयाचकौ ।
बकवाकविड़ालाश्च शूद्रवृत्तिश्च गर्हितः ॥
वाक्दुष्टबालदमको नित्यमप्रियवाक्कया ।
आसक्तो दूतकामादावतिवाक् चैव दूषितः ॥
निराचाराश्च ये विप्राः पितृमातृविवर्जिताः ।
विद्वांसोऽपि हि नाभ्यर्च्याः पितृश्राद्धेषु सत्तमैः ॥
न वेदैः केवलैर्वापि तपसा केवलेन च ।
संवृत्तैः किन्तु तैः प्रोक्ताः पात्रता ब्राह्मणस्य च ॥
यत्र वेदास्तपो यत्र यत्र वृत्तं द्विजाग्रजे ।
पितृश्राद्धेषु तं यत्नाद्विद्वान्विप्रं समर्चयेत् ॥
वेदशास्त्रार्थविच्छान्तः शुचिर्धर्ममनाः सदा ।
गायत्री ब्रह्मचिन्ताकृत् पितृश्राद्धे स पावनः ॥
रथन्तरं बृहज्ज्येष्ठः सामवित् त्रिसुपर्णकः ।
त्रिमधुश्चापि यो विप्रः पितृश्राद्धेषु पूजितः ॥
मातामहश्च दौहित्रो भागिनेयोऽथ मातुलः ।
मातृस्वस्रेयश्च तथा तथा मातुलजोऽपि वा ॥

जामाता श्वशुरो बन्धुर्भार्याभ्राता च तत्सुतः।
सुवृत्ताश्च सदाचारा ये ते श्राद्धेषु पावनाः॥
ऋत्विग्गुरुरुपाध्याय आचार्यः श्रोत्रियोऽपरः।
एते श्राद्धेषु वै पूज्याः ज्ञातिसम्बन्धिबान्धवाः॥
अग्निहोत्री च यो विप्र आवसथ्याग्निकोऽपि च।
पितृमातृपरावेतौ भोक्तव्यौ हव्यकव्ययोः॥
कृष्येकवृत्तिजीवी यो भोक्ता मात्रादिकेषु च।
षट्कर्मनिरतः पूज्यो हव्यकव्ये सदैव हि॥
चतवृत्तिः सदाचारो मात्रादिभक्तितत्परः।
शुचिः षट्कर्मयुक्तश्च हव्यकव्येषु पूजितः॥
युगानुरूपतो यस्तु विद्याचारादिसंयुतः।
स पूज्योऽनभिशस्तः स षट्कर्मनिरतो द्विजः॥
इत्युक्तगुणसम्पन्नान् ब्राह्मणान् पूर्ववासरे।
निमन्त्रयेत सद्भक्त्या नियोगस्थानपूर्वकम्॥
सव्येन देवतार्थन्तु पित्रर्थमपसव्यवान्।
ततस्तै श्ररितव्यं स्यादुक्तं पितृव्रतद्विजैः॥
जितेन्द्रियैस्तु भाव्यं स्यादहोरात्रमतन्द्रितैः।
तस्मिन्नहनि वा प्रात येन श्राद्धमवस्थितम्॥
निमन्त्रयेत तान् भक्त्या तैश्च भाव्यं जितेन्द्रियैः।
विप्रोरुपार्श्वपृष्ठस्थाः पितृमातामहादयः॥
भुञ्जन्ति क्रमशः श्राद्धे तथा पिण्डांशिनोऽपि च।
निमन्त्रेत द्विजं श्राद्धे न शयीत स्त्रिया सह॥
अध्वानं न च वै यायान्न ब्रूयादनृतन्तथा।
नाधीयीत दिवास्वापं न कुर्वीत न सम्वदेत्॥

न म्लेच्छपतितैः सार्द्धं न वदेच्च निषिद्धकम् ।
प्राङ्मुखौ दैविकौ विप्रौ विप्रास्त्रय उदङ्मुखाः ॥
एकैको वा भवत्वत्र स्या दसम्पत्ताविति क्रमः ।
पात्रं वा दैविकं कृत्वा विप्र एकस्तु पैतृके ॥
इति वा निर्वपेत् श्राद्धं निर्धनश्चान्यदाचरेत् ।
गत्वारण्यमसमानुष्य ऊर्द्ध्वबाहुर्विरौत्यदः ॥
निरन्नो निर्धनो देवाः पितरो ह्यानृणाङ्कुरु ।

न मेऽस्ति वित्तं न गृहं न भार्य्या
श्राद्धं कथं वः पितरः! करोमि ।
वने प्रविश्येह रुतं मयोच्चै-
र्भुजावृते वर्त्मनि मारुतस्य ॥
श्राद्धर्णमेतद्भवतां प्रदत्तम्
मह्यं दयध्वं पितृदेवताभ्यः ।
अस्या वचोऽन्विप्र भुजावतस्तु
दिवाच रात्रिं समुपोष्य तिष्ठेत् ॥
भवेत्स चैतेन कृतेन तेषा
मृणां न मुक्तः पितृदेवतानाम् ।
निर्वित्तनिर्भाग्य निराश्रयाणाम्
श्राद्धस्य मार्गः प्रथितो मुनीन्द्रैः ॥

ख्यातं मया रुदित्वा वः पितरः श्राद्धदेवताः ।
श्राद्धार्णस्य विमुक्तोऽहं महतः पितरो मया ॥
कृतोपवासः स तस्मात् श्राद्धर्णाद्विप्रमुच्यते ।
एतैश्चापि न यः कुर्य्यात् पितरस्तेन वै हतान् ॥
सम्पत्तावथ पात्राणामेकैकस्य त्रयस्त्रयः ।

पित्रादौ ब्राह्मणाः प्रोक्ता श्चत्वारो वैश्वदेविके ॥
द्वौ वापि दैविके विप्रौ चैकैकोवा न दोषभाक् ।
स्यान्मातामहिकेऽप्येवमेकोऽपि वैश्वदेविके ॥
नतु वैकृतु सर्वेषां आश्वलायनमतः स्थितम् ।
पितॄणामर्चयेद्विप्रो मन्त्रपिण्डनिदर्शनम् ॥
न मातामहिकं श्राद्धं श्रोतुमुक्तन्तु साग्निके ।
अनग्निकस्य तत् कुर्य्यादिति केचिन्मतं विदुः ॥
साग्निकस्यापि कार्यं स्यात् श्राद्धं मातामहं द्विजैः ।
षट् दैवत्यमितीत्येकेऽप्येकेतु पार्वणद्वयम् ॥
अपुत्रस्य पितृव्यस्य तत्पुत्त्रैर्भ्रातृजो भवेत् ।
स एव तस्य कुर्वीत पिण्डदानोदकक्रियाः ॥
पार्वणन्तेन कार्य्यंस्यात् पुत्रवत् भ्रातृजेन तु ।
पितृस्थाने तु तं कृत्वा शेषे पूर्ववदुच्चरेत् ॥
श्राद्धं पत्यापि कार्यं स्यात् अपुत्रा यास्तु योषितः ।
तस्यापि हि तया कार्यमेकत्वं हि तयोर्यतः ॥
भ्रातुर्ज्येष्ठस्य कुर्वीत कार्यं ज्येष्ठोऽनुजस्य च ।
देवहीनन्तु तत् कुर्यात् इति धर्मविदो विदुः ॥
पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ।
पुत्राभावेतु पत्नीच तदभावे सहोदरः ॥
पित्रादीनान्तु कर्त्तव्यं समीलन्ते यतस्त्वमी ।
नावह्नेयास्तु ते सर्वे कृते तु स्यान्महत् फलम् ॥
पितामहस्य चान्येन यस्य जीवन्नवा द्विजः ।
प्रत्यक्षास्तेऽपि वै पूज्याः संस्थित्यर्थं यतश्च तत् ॥
विद्यमानस्त्रयाणां स्यात् प्रत्यक्षः पूज्य एव सः ।

गौतमस्य मतं ह्येतदिति वाशिष्ठजोऽब्रवीत् ॥
विद्यमाने तु पितरि श्राद्धं कर्त्तुमुपस्थितः ।
पितृवत्पितृपित्रादेः कुर्य्याच्छ्राद्धमसंशयम् ॥
पुत्रिकायाः सुतः श्राद्धं निर्वपेन्मातुरेव सः ।
तत्पितुर्निर्वपत्यस्मात् तृतीयं तु पितुः पितुः ॥
अतएव द्विजः पुत्रीमुद्वहेन्न कथञ्चन ।
उद्वोढ़ः पुत्रः पुत्रोऽसौ पुत्रोऽसौ मातुरेव हि ॥
पुत्त्रश्च दुहितुश्चैव समौ तौ धार्मिकौ पथि ।
अर्थकृतौच विप्रोक्तौ तुल्यौ तौ शक्तजोऽब्रवीत् ॥
मुख्यं यथा पितुः श्राद्धन्तथा मातामहस्यच ।
पुत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ॥
दौहित्रः पार्वणश्राद्धे ~~कालस्तु कुतपस्तथा~~ ।
तथा कृष्णास्तिला विद्वान् इति शास्त्रविदो विदुः ॥
काम्यमभ्युदयञ्चैव द्विविधं पार्वणं स्मृतम् ।
तथाकामन्तु काम्यं स्याद् वृद्धावभ्युदये स्मृतः ॥
क्षत्रियायान्तु यो जातो वैश्यायान्तु तथा सुतः ।
ब्राह्मणस्य पितुस्तौ तु निर्वपेतां द्विजाग्रवत् ॥
क्षत्रियस्य सुतश्चैव तथा वैश्यसुतोऽपि च ।
कृतान्नेन द्विजांस्तर्पेच्छ्राद्धद्वयञ्च निर्वपेत् ॥
आमान्नेन तु शूद्रस्य कर्यात्तु द्विजपूजनम् ।
कृत्वा श्राद्धन्तु निर्वप्य सजातीनाशयेत्तथा ॥
यः शूद्रो भोजयेद्विप्रान् कृतपाकाशनेन तु ।
सकृद्विप्रकृते ताभिर्लिप्यते स कुजोऽब्रवीत् ॥
शूद्रपाकं द्विजेभ्यश्च विभवान्वो ददाति यः ।

कृमीभवति पाताले स युगानेकविंशतिः ॥
भोजितेन तु विप्रेण यत्पापं तस्य जायते ।
तेनासौ लिप्यते मूढो यः शूद्रो भोजयेद्द्विजान् ॥
योऽहं मन्ये द्विजाभ्यान्तु शूद्रास्तेन भोजयेत् ।
स गच्छेन्नरकं घोरं पुनरावृत्तिदुर्लभाम् ॥
यत्किञ्चिद्दुष्कृतं विप्रे पूर्वं कृतन्तु तिष्ठति ।
तेनासौ लिप्यते पापी यः शूद्रो भोजयेद्द्विजान् ।
शूद्रोच्छिष्टन्तु यो भुङ्क्ते मन्ये विप्रोऽधमः स तु ॥
कृमित्वं याति विष्ठायां युगानि ह्येकविंशतिः ।
शूद्रोच्छिष्टन्तु भुञ्जानः पञ्चाहानि द्विजोत्तमः ॥
स तद्विष्ठाकृमित्वं हि प्राप्नोति हि शतं समाः ।
अतो न भोजयेद्विप्रान्निवपेन्नैव पूजयेत् ॥
शूद्रान्नं भोजनाद्युक्तं इति पाराशरोऽब्रवीत् ।
अग्नौकरणपिण्डांश्च कुर्यादामाशनेन तु ॥
हुतिर्दैर्दधिमध्वाज्यैः सम्पृक्तः शक्तुकैरपि ।
यवाद्यसंस्कृतान्नेन होमापि च स निर्वपेत् ॥
जलेन पयसा वापि नखाद्श्राद्धकृत्तथा ।
नामान्नेन द्विजैः कार्यं कदाचिदपि सद्द्विजैः ॥
अर्पयित्वा द्विजो कस्तु तथापि पाकमाश्रयेत् ।
न कुर्य्यात् परपाकेन नैकपाकेन तु द्वयम् ॥
नैकश्राद्धे द्वय कुर्यान्नच कुर्यात् परान्नभुक् ।
पित्रादीनां सगोत्रा ये तथा मातामहस्य च ॥
तेषामेकेन पाकेन कार्यं पिण्डविवर्जितम् ।
केचित् सपिण्डमिच्छन्ति समगोत्रन्तथा तथा ॥

पिता मातामहश्चान्ने स्याद्भिन्नगोत्रतया तथा ।
पृथक् कर्तुमशक्यं स्यादर्थपात्राद्यसम्भवे ॥
अवश्यन्तत्र कर्तव्यमेकदेवमपाश्रयेत् ।
येषां नोद्वाहसंस्कारो ह्यन्यसंस्कारसंस्कृताः ॥
सङ्कल्पितं भवेत्तेषां श्राद्धं कार्य्यं स्वकेऽहनि ।
केचित्सपिण्डमिच्छन्ति ब्राह्मं संस्कारवत्तथा ॥
आद्यो हि ब्राह्मसंस्कारस्तस्मात् पिण्डान् प्रदीयते ।
सर्वेष्वपि निमित्तेषु कर्तव्यं पिण्डसंयुतम् ॥
पितॄणां त्रिविधा यस्माद्गतिः प्रोक्ता मुनीश्वरैः ।
वैश्वदेवः सदा कार्य्यो श्राद्धे च समुपस्थिते ॥
पाकशुद्ध्यर्थमेवैतत् पूर्वमेतद्विधीयते ।
वैश्वदेवोऽग्रतस्त्वेव श्राद्धकाले विशेषतः ॥
पाकशुद्धिस्तु विज्ञेया भुक्तोच्छिष्टं तु वर्जयेत् ।
संप्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैवच ॥
अग्रतो वैश्वदेवं हि पश्चादेकादशेऽहनि ।
एकोद्दिष्टविशेषेण प्रागेव ह्यग्निपूजनम् ॥
कालस्तु कुतपस्तस्य रोहिणः पार्वणस्य च ।
वामतश्चासनन्दद्यात् पितृकार्य्येषु सत्तमः ॥
दैविके दक्षिणन्तद्वदिति पाराशरोऽब्रवीत् ।
आसने चासनन्दद्याद्वामे वा दक्षिणेऽपि वा ॥
पितृकार्येषु वामन्तु दैवे कर्मणि दक्षिणम् ।
पितृश्राद्धेषु यो दद्याद्दक्षिणं दर्भमासनम् ॥
नाश्नन्ति पितरस्तस्य साध्यानि वत्सराणि षट् ।
तस्माद्वामतो वा पात्रे पितृकर्मणि चासनम् ॥

दैविके दक्षिणास्तद्वदिति वाशिष्ठजोऽब्रवीत् ।
कुत्र कालेच कर्तव्यं श्राद्धन्तत् पैतृकं प्रभो! ॥
वदस्व निश्चयन्तत्र विवदन्त्यपरेऽत्र तु ।
पञ्चदशमुहूर्त्ताहस्तत्प्रागर्द्धं दिनं स्मृतम् ॥
अपरार्धं स्मृता रात्रि स्तन्मध्यः कुतपोमतः ।
यथा यथा च ह्रस्वत्वं पुंसः स्यात्तेनसो भवेत् ॥
तथा तथा पवित्रं स्यात्कालः श्राद्धार्चनादिषु ।
च्छायेयं पुरुषस्यैनस्तस्मादाभो भवेद्दध: ॥
आधानश्राद्धदानादेः स कालोऽक्षयकृत् स्मृतः ।
अयुतं तु मुहूर्त्तानामर्द्धं ह्यष्टदशाधिकम् ॥
लिंशद्भिस्तै रहोरात्रमिति माध्यन्दिनी श्रुतिः ।
दिवसस्याष्टमे भागे मन्दीभवति भास्करे ॥
स कालः कुतपो ज्ञेयस्तत्र दत्तन्तु चाक्षयम् ।
मध्याह्ने तु गते सूर्य्ये न पूर्व्वे नच पश्चिमे ॥
तुल्याग्रसंस्थिते चैव सोऽष्टमो भाग उच्यते ।
मध्याह्नाच्चलितो भानुः किञ्चिन्मन्दगतिर्भवेत् ॥
स कालो रौहिणो नाम पितॄणां दत्तमक्षयम् ।
तस्मात् सर्वप्रयत्नेन रौहिणन्तु न लङ्घयेत् ॥
अकाले विधिना दत्तं न देवपितृगामि तत् ।
अष्टवृद्धि र्भवेद्यत्र तत्राब्दमुभयात्मकम् ॥
श्राद्धन्तत्र च कुर्वीत मासयो रुभयोरपि ।
पिण्डवर्ज्यं मसंक्रान्ते संक्रान्ते पिण्डसंयुतम् ॥
षष्टिभिर्दिवसैर्मास स्त्रिंशद्भिः पक्ष उच्यते ।
संक्रान्तिरहितः पक्ष स्तत्र कार्यं विपिण्डकम् ॥

सिनीवालीमतिक्रम्य यदा संक्रमते रविः।
युक्तसाधारणैर्मासैः स काल उच्चरोभवेत्॥
संक्रान्तिवर्जितः काल समलः पापसम्भवः।
रक्षसाम्भागधेयोऽसौ उत्सवादिविवर्जितः॥
तत्र नैमित्तिकं कार्य्यं श्राद्धं पिण्डविवर्जितम्।
नित्यं तु सततं कार्य्यमिति पाराशरोऽब्रवीत्॥
अहोभिर्गणितैर्यत् स्यात् तत्कार्यं यत्र सर्व्वदा।
तिथिनक्षत्रयोगश्च जातकर्मादिकाश्च ये॥
नैमित्तिकाश्च दैवाद्ये कार्य्यास्तेऽपि मलिम्लुचे।
तीर्थस्नानं गजच्छायां द्विमुखीं गोप्रदानवत्॥
मलिम्लुचेऽपि कर्त्तव्यं सपिण्डीकरणान्तथा।
आग्रहणा ममावास्या मष्टकाग्रहसंक्रमम्॥
अधिमासेऽपि कार्य्यं स्यादिति पाराशरोऽब्रवीत्।
नित्यञ्च नित्यशः कार्यमिष्टकामांश्च वर्जयेत्॥
वार्षिकं पिण्डवर्ज्जं स्यादन्यस्मिन् पिण्डसंयुतम्।
दृष्टिराग्रहणं श्राद्ध मन्वाहार्यञ्च सर्वदा॥
कर्त्तव्यं सततं विप्रैरिष्टिकामांश्च वर्जयेत्।
दैवे कर्मणि संप्राप्ते तिथौ यत्रोदितो रविः॥
सा तिथिः सकला ज्ञेया विपरीता तु पैतृके॥
वृद्धिमद्दिवसे कार्यं श्राद्धमाभ्युदिकं द्विजः।
क्षीणमानदिने कार्यं श्राद्धं विद्वन्! क्षयादिकम्॥
मित्रे चैव सगोत्रे च पितृमातृसहोदरे।
आसनञ्चैव दातव्यं भोक्तव्या एवमेव ते॥
ब्राह्मणं न सगोत्रन्तु पूजयेत् पितृकर्मणि।

नोपतिष्ठन्ति तत्तेषां किन्तु स्याच्च निराशता॥
स्वगोत्रं भोजयेद्यस्तु पितृश्राद्धेषु वै द्विजः।
हतास्तु पितरस्तेन न भुक्तमुपतिष्ठति॥
श्राद्धं कुर्वन् द्विजोऽज्ञानात् स्वगोत्रं यस्तु भोजयेत्।
स लुप्तपितृदेवः सन्नरकं प्रतिपद्यते॥
तस्मान्न गोत्रिणं विप्रं भोजयेद्विधिपूर्वकम्।
ज्ञातिमात्रो न भोज्यस्तु ब्रह्मितैस्तु द्विजोत्तमैः॥
दक्षिणाप्रवणे देशे श्राद्धं कुर्य्यात्तु पैतृकम्।
पितृणां पावनो देशः स प्रोक्तोऽन्वयदृष्टिकृत्॥
देशे काले च पात्रे च विधिना हविषा च यत्।
तिलैर्दर्भैश्च मन्त्रैश्च श्राद्धं स्यात् श्रद्धयान्वितम्॥
तैजसानि तु पात्राणि ह्यर्घाय भोजनाय च।
कृत्पाषाण मयान्येके अपराण्यपरेविदुः॥
पलाशपद्मपत्राणि अनिषिद्धानि यानि च।
तानि श्राद्धेषु कार्याणि पितृदेवहितानि च॥
वृद्धिश्राद्धेषु मन्यन्ते ब्रह्ममयानि तु केन च।
शौनकस्य मतं ह्येतत् वृथाकार्य्यन्तु मृण्मयम्॥
एकद्रव्याणि कार्याणि पात्राणि भोजनार्थयोः।
त्रीणि पैतृककार्य्याणि भेदमेकत्र वर्जयेत्॥
एकस्य वैश्वदेवानि पैतृकाण्येकवस्तुनः।
इतिवा तानि कार्य्याणि भेदमेकत्र वर्जयेत्॥
वटाश्वत्थार्कपत्रेषु न भुञ्जीत कदाचन।
न जातिकुसुमैर्विद्वान् विल्वपत्रैश्च नार्चयेत्॥
सुरभीनागकर्णाद्यैः करवीरैश्च नारकैः।

बिल्वपत्रैरर्चयेद्विद्वन् पितृश्राद्धेषु गर्हितैः॥
तद्भुञ्जानैः कृतः श्राद्धं निराशैः पितृभिर्गतैः।
सर्वाण्यपि च पुष्पाणि निषिद्धान्यपराणि तु॥
वर्जयेत् पितृश्राद्धेषु केतकीकुसुमानि च।
गोरम्भाभृङ्गराजाद्यै र्मल्लिकाकुब्जकैरपि॥
समर्चयेत् द्विजान् श्राद्धे हव्यकव्योदिते द्विजः।
न दद्याद्गुग्गुलं श्राद्धे द्विजानां पितृदैवते॥
धूपाभावे तु कर्तव्यं घृतधूपं द्विजोत्तमः।
कुङ्कुमाद्यं चन्दनञ्च देयं गन्धविमिश्रितम्॥
ऊर्द्ध्वञ्च तिलकं कुर्यान्न कुर्याच्च त्रिपुण्ड्रकम्।
ऊर्द्ध्वञ्च तिलकं कुर्याद्दैवे पित्ये च कर्मणि॥
निराशाः पितरो यान्ति यस्तु कुर्यात् त्रिपुण्ड्रकम्।
पवित्रं यदि वा दर्भं करे कृत्वा द्विजान्नरः॥
समालभेत् द्विजानञ्च तत् श्राद्धमसुरं भवेत्।
गन्धाश्च विविधा देयाः कर्पूरागुरुमिश्रिताः॥
शक्त्या वस्त्राणि देयानि तदभावे च निष्क्रयम्।
दीपश्च सर्पिषा देय स्तिलतैलैश्च वा पुनः॥
न काष्ठतैलैरन्यैस्तु कदाचित् सार्षपावसैः।
देशधर्मं समाश्रित्य वंशधर्मं तथापरे॥
सूरयः श्राद्धमिच्छन्ति पार्वणाञ्च त्रयान्यपि।
स्त्रीणामपि पृथक् श्राद्धं न मन्यन्ते स्वधर्मतः॥
मातामहस्वगोत्रेण मातुस्ते तु सपिण्डताम्।
मातामह्यास्सहेच्छन्ति मातुस्तेऽपि सपिण्डताम्॥
स्त्रीणां स्त्रीगोत्रसम्बन्धात् पुंगोत्रेण नृणां यतः।

सपिण्डीकरणं काले श्राद्धद्वयमुपस्थितम् ॥
देवाद्यं प्रथमं कुर्यात् पितृणां तदनन्तरम्।
देवाद्यं पार्वणं प्रोक्तं प्रेतश्राद्ध मथापरम् ॥
एकतश्च ततः पश्चात् कृत्वा विप्रांश्च भोजयेत्।
पितृणा मर्घ्यपात्राणि प्रेतपात्र मथापरम्॥
प्रेतपात्रन्तु तत् कृत्वा पितृपात्रेषु योजयेत्।
ये समाना इति द्वाभ्यां पूर्ववच्छेष माचरेत् ॥
सपिण्डीकरणं यस्य कृतं न स्याद्द्विजन्मनः।
आदेयं तस्य देयं स्यात् पिण्डमेकं तु निर्वपेत् ॥
सपिण्डीकरणाच्चैतत् क्रियाश्चैव त्र्याब्दिकम्।
एकादशाह्निकं कृत्वा योऽह्नि मासि च मासिके ॥
वर्षे वर्षे च कर्तव्यं मृतेऽह्नि च तत् पुनः।
नापुत्त्रस्य सपिण्डत्वं केचिदिच्छन्ति तद्विदः ॥
विशेषतोऽनपत्यस्य सत्यप्यत्राधिकारिणी।
विद्यमानः पिता यस्य स चेद्यदि विपद्यते ॥
तदन्तरा सपिण्डत्वं वदन्ति श्राद्धवादिनः।
आभ्युदयिकसम्पत्तौ अर्चा प्रागेव कारयेत् ॥
कुर्यात् परिजनेनैतत् स्वयं वापि द्विजोत्तमः ॥
संन्यसन् सर्वकर्माणि तत् श्राद्धाय च तद्दिने।
अग्निदाप्यदिनश्चैके केचिन्मृतदिनं विदुः ॥
विदेशस्थे मृताहस्तु शुक्लेवासि तु द्वादशी।
संग्रामे संस्थितानाञ्च प्रेतपक्षे शशिक्षये ॥
अग्निसर्पादि मृत्यूनां षण्मासोपरि सत्क्रिया।
तेषां पार्वण मेवोक्तं त्र्यब्देऽपि च सत्तमैः ॥

चन्द्रक्षया नाशक संयुगेषु यः प्रेतपक्षे हतवत्सदण्डः।
सपिण्डतानन्तर माब्दिकानां भवन्ति तेषा मिह पार्वणानि॥
क्षयाह्निकादि कार्याणि ब्रूयुर्धर्मविदो जनाः।
अब्दादूर्ध्वञ्चरन्त्यके कृत्वा च वैष्णवीं बलीम्॥
विष्णुर्चनं विना नार्वाक् प्रदत्तमुपतिष्ठति।
विद्युता वृक्षपातेन अश्वेन महिषेण वा॥
इत्यादिकेन हत्यः स्यात् यत्र तिथौ च तत्र च।
तन्निमित्तस्य हृप्त्यर्थं मासि मासि क्षयाह्निकम्॥
कर्त्तव्यमवधौ याव त्ततः कुर्वीत सत्क्रियाम्।
अनाशक हतानाञ्च क्षयाहेऽपि च पार्वणम्।
मन्यासवद्धि मन्यन्ते केचि द्विदु रवैदिकम्॥
एकोद्दिष्ट मदैवं स्यादेकार्थकपवित्रकम्।
आवाहनाग्नौ करणं हीनं तदपसव्यवत्॥
पूर्वोत्तर प्लवे देशे श्राद्धं स्यान्मातृ पूर्वकम्।
शतपीतादिपिष्टेन चर्चिते भूतले च तत्॥
उद्दिष्टक्रतुकालस्य तत् प्रागेव विधीयते।
आभ्युदयिक दैवानि पूर्वाह्ले स्यु रिति स्मृतिः॥
तिलाक्षतोदकै र्युक्ताः न्यासनादिप्रदक्षिणम्।
परि ह्नत्यादि दृष्टेन कृत्वा च शान्तिपूर्वकम्॥
व्रीहयो यवगोधूमाः क्षयताश्चाक्षताः स्मृताः।
अक्षतामलकैः पिण्डान् दधिकर्कन्धु मिश्रितैः॥
नान्दीमुखेभ्यो देवेभ्यो: प्रदक्षिणा कुशासनम्।
पितृभ्य स्तन्मुखेभ्यश्च प्रदक्षिणा मिति स्मृतिः॥
कर्कन्दुभि र्यवैः पुष्पैः शमीपत्रै स्तिलैस्तथा।

तेभ्योह्यर्घ्यः प्रदातव्यः पितृभ्यो दैवतैः सह ।
मातामहानामप्येवं षट् दैवत्यं श्रियेद् द्विजः ॥
माङ्गल्यपूर्वकं सर्वं गन्धाद्यपि च धारयेत् ।
तृप्तिस्तत् पितृमातॄणां धूपो देयश्च गुग्गुलः ॥
घृताभिघार धूपो वा यथा स्यात् परिपूर्णता ।
दीपाश्च बहवो देयाः विप्रं प्रति घृतेन च ॥
तैलेन केन ये वापि नवनीतेन चैव हि ।
मालत्या शत पत्रावा मल्लिका कुन्दयो रपि ।
केतक्या पाटलायावा देया श्राद्धे न लोहिताः ॥
वासांसि च यथाशक्त्या दद्यात्तेभ्योऽथ निक्रयम् ।
परिपूर्णं तथा तत्स्यात्तथाकार्य्यं भवेदिति ॥
सुवेष भूषणैः सूत्रसालङ्कारै स्तथान्तरैः ।
कुङ्कुमाद्यनुलिप्ताङ्गै र्भोव्यन्तु ब्राह्मणैः सह ॥
स्त्रियोऽपितु तथा भूता गीतनृत्यादिहर्षिताः ।
दुन्दुभीनादहृष्टाङ्गा मङ्गलध्वनिकारिकाः ॥
सोमसदोऽग्निस्वात्ताश्च तथा बर्हिषदोऽपि च ।
सोमपाश्च तथा विद्व स्तथैव च हविर्भुजः ॥
आज्यपाश्च तथा वत्स तथा परे सुकालिनः ।
एते चान्ये च पितरः पूज्या सर्वै र्द्विजाग्रजैः ॥
वसवश्च तथा रुद्रा स्तथैवादितिसूनवः ।
देवता अपि यज्ञेषु स्वायम्भुवाद्धि कीर्तिताः ॥
एते च पितरो दिव्या स्तथा वैवस्वतादयः ।
ये तत्पौत्राः प्रपौत्राश्च असंख्याः पितरः स्मृताः ॥
एते श्राद्धेषु सन्तर्प्या सु निचाद्यै र्द्विजातिभिः ।

सन्तर्पिता इमे सर्वान् प्रीणयन्ति नृणां पितॄन् ॥
प्राक् सङ्केतितान्विप्रान् स्नातान् काले समागतान्।
दत्त्वार्घ्यान् कृतवत् शौचान् आचान्तानुपवेशयेत् ॥
ये स्पृशन्त्यत स्त न्येऽङ्घ्रि चाचमन्ति पिबन्ति च।
तेषान्न जायते शुद्धिराचमन्त्यस्तजाह्नि ते।
सर्वाणि खानि कार्याणि कार्यच्छिद्राणि चात्मनः ॥
तैराचान्तै र्भवेच्छुद्धिरशुचिस्त्वन्यथा भवेत्।
व्याहृत्य वैष्णवान् मन्त्रान् स्मृत्वा च सर्वमातरम् ॥
शान्तस्वान्तौ द्विजान् पृष्टे करिष्ये श्राद्धमित्यथ।
करवै करवाणीति पृष्ट्वा ब्रूयु र्द्विजास्ततः ॥
अनुज्ञायै वचो ह्येतत् कुरुष्व यत् कृतं कुरु।
ततो दर्भासनं कृत्वा देवेभ्यः समयं पुनः ॥
दक्षिणं जानुमन्वास्य दक्षिणाञ्च तथासनम्।
पात्रद्वय मतोऽर्घ्यार्थं तैजसञ्चैकवस्तुजम् ॥
आसनं सपवित्रं तत् समभ्यर्च्य विधानतः।
प्राङ्मुखोऽमरतीर्थेषु शन्नोदेव्योदकं क्षयेत् ॥
यवोऽसीति यवांस्तत्र तूष्णीं पुष्पाणि चन्दनम्।

यवोऽसि पुण्यमिति संश्रितोऽसि
सम स्तथान्य प्रभुरस्यमुत्र।
मरुन्मनुष्य पितृगणस्य तृप्तै
क्षितावतीर्णोऽसि हितोऽसि पुंसाम् ॥
उत्पादपूर्वक मिमानस्तेन वेधा
भूयः प्रसन्न मनसा तदुपासितः सन्।

चिक्षेप तान् सलिलनाथ प्रसिच्यताह्वि-
तेनाहृता वरुण दैवतका बभूवुः ॥
आनीयमान्विधिरिमान्वरुणस्य लोकान्
अन्नप्रभून्भुवि यवान् वसुलोक तृप्तैः।
तत्पिष्ट पक्वहविषा पितृदेवतानाम्
तृप्त्या वसन्ति दिवि दानवरास्तएव ॥

ततः सव्यं करं न्यस्वा विप्रो दक्षिणजानुभिः।
देवानावाहयिष्येव मिति वाच मुदीरयेत् ॥
आवाहये त्यनुज्ञा च विश्वे देवाः स आगतः।
विश्वे देवा शृणुतेममिति मन्त्रद्वयं पठेत्।
सोमेन सहराज्ञेति केचित्पठन्त्यदोऽपि च ॥
व्याहृत्य मन्त्रमावाह्य हस्ते दत्त्वा पवित्रकम् ॥
अर्चयेत्तं द्विजं पुष्पैः दद्यादर्घं करे पुनः।
विश्वेभ्य स्वेष देवेभ्यस्तुभ्य मर्घ्यं प्रदीयते ॥
या दिव्या इति मन्त्रेण पाणौ विप्रस्य तं क्षिपेत्।
अपसव्य मतः कृत्वा निर्वर्त्य वैश्वदैवकम् ॥
आपो भूमिगताः केचिदादित्येत्यभिमन्त्र्यच।
पुनस्ताभिकयाभ्याञ्च कुर्वन्ति मुखमार्जनम् ॥
उदकं गन्धधूपांश्च वासांसि चन्दनं स्रजः।
दत्त्वा आपः च सोद्धूता दद्यात् पितृ कुशासनम्।
सोदकान् द्विगुणीभूतान् सतिलान् सकुशानपि ॥
गोकर्णमातृकान् साग्रान् प्रदद्याद्वामपार्श्वतः।
चतुर्थ्यन्तं सगोत्रञ्च पितृनाम च शर्मवत् ॥
उच्चार्य्य परयोस्तद्वदिदं तुभ्यं कुशासनम्।

पित्रर्घ्यं मर्घ्यं पात्राणि संपूज्य दक्षिणामुखः ॥
तिलोऽसीत्येतदुच्चार्य्य यवस्थाने तिलान् क्षिपेत् ।
भूलग्नः सव्यजानुः सन् पितृतीर्थे नचात्वरः ।
पितृध्यानमनाः कुर्यात् पितृकार्य्यमशेषतः ॥
आवाहयिष्ये पित्रादीन् अनुज्ञावाहयेति च ।
उशन्तः स्त्वेति ऋचीयं यथायन्तु न इत्यपि ॥
अन्येत्वपहता असुरा इत्यादि च पठन्ति हि ।
अन्यविघ्नव्यपोहार्थं वक्तव्य मिति केचन ॥
प्राग्व द्धिशार्च्चनं कार्य्यं प्राग्वदर्घ्यप्रसेवनम् ।
प्राग्वन्मन्त्रं समुच्चार्य्य प्राग्वच्च मुखमार्जनम् ॥

एते तिलास्तु विधिना शशिलोकतस्तु
प्राक्कृत्य भोजन हिते न शुभाय धन्यः ।
क्षिप्ता मलानि पुरुषस्यच तर्पणाद्यै
र्यं घ्नन्ति तेषु भुवि सत्सु कुतो भयं स्यात् ॥
तिलोऽसि चन्द्रामृतदैवतोऽसि
हितोऽस्यशेषे पितृ देवतानाम् ।
कर्तापि तृप्तिं परमां पितृणा
मुक्तोऽसिते न भवता विधिसम्भवोऽसि ॥

अर्घ्यपात्राणि सर्वाणि कृत्वा तान् पाद्यपात्रके ।
पितृभ्यः स्थान मसीतिन्युब्जं कुर्य्यादधश्च तत् ॥
यस्तूद्धरेदविज्ञाना दर्घ्यपात्रन्तु पैतृकम् ।
तद्धि श्राद्ध मभोज्यं स्यात् कृत्यैः पितृगणै र्गतैः ॥
आश्रित्य प्रथमं पात्रं तिष्ठन्ति पितरो नृणाम् ।
श्राद्धे तस्मान्न त द्विद्वानुद्धरेत् प्रथमं सुधीः ।

वाचयेत् परिपूर्णन्तु वासोदत्त्वा विधानतः।
अस्त्वेतु परिपूर्णन्तु ब्रूयुरेते द्विजातयः॥
ससर्पिः पात्र मादाय सपिधानं विधानतः।
नत्वा सर्वान् द्विजान् पृच्छेत्करिष्येऽग्नाविति द्विजः॥
कुरुष्वेति त्वनुज्ञाता जुहोत्यग्नौ ततः पुनः।
भोजने पितृविप्राणा मितिमन्त्र मुदीरयेत्॥
अग्निशब्दं चतुर्थैकवचनान्तं समुच्चरेत्।
कव्यवाहनशब्दं च सोमं पितृमदित्यपि॥
पङ्क्तिमूर्द्धान मेवात्र पृच्छेदितिह केचन।
पितृश्राद्धप्रदानत्वात् साग्निस्त्वे नाथवा पुनः॥
तृतीयां मनसा दद्यात् यमाय त्वेतवा पुनः।
तुष्णीं यत्र तु होमादौ प्रजापतिस्तु तत्रतु॥
अहं वाक् तस्मिन् वाक् सम्वादो भून्मनोगिरोः।
अहव्यवाद्यते वाणी अमुष्याग्नेः प्रजापतेः॥
अग्नावाहुतयः प्रोक्तास्तिस्रएव मनीषिभिः।
अग्निवद्विप्रपात्रेषु पश्चात्तज्जुहुयाद्द्विजः॥
अग्नौकरण शेषन्तु पितृपात्रेषु दापयेत्।
प्रतिपाद्य पितृणां तु दद्याद्वै वैश्वदेविके॥
यस्याग्नौकरणं दद्यात् पितृविप्रकरेषु च।
तेनोच्छेषित मेतत् स्यात्समाप्तिस्तावतैव तु॥
पितरः कव्यवक्त्राश्च वह्निवक्त्राश्च देवताः।
अतः पाणौ न तद्देयं देयं पात्रे कुशान्विते।
वैश्वदेविकविप्राणां पात्रे वा यदिवा करे॥
अनग्निक स्तु तद्द दद्यात् प्रथमं वैश्व देविके।

कृतशेषमशेषाणां पात्रे दद्याद् द्विजोत्तमः ।
पृच्छेत्सर्वांश्च यत् कृत्यं सामान्येन द्विजोत्तमान् ॥
दत्त्वान्ये करणञ्चान्यं विप्राणां तृप्तिकृद्धविः ।
परिवेश्य मिति ब्रूयु स्ततोविधिरनन्तरः ॥
प्रागग्नौ करणं दद्यात् अन्यत्दत्त्वा च तृप्तिकृत् ।
एकीकृतं तु भुञ्जानाः प्रीणयन्तु नृणां पितॄन् ॥
परिवेश्य हविः सर्वं तदर्थं यच्च वै स्मृतम् ।
अभिमन्त्र्य मतः पात्रमपोशनप्रदानवत् ॥
अन्नपूर्णस्य पात्रस्य कर्त्तव्य मभिमन्त्रणम् ।
आपो दत्त्वा तु संकल्पमेष श्राद्धविधिर्वरः ॥
वर्जितानि न देयानि पितृप्रीतिं विजानतः ।
हविष्याणि प्रदेयानि वक्ष्यमाणानि वर्जयेत् ॥
निष्पावा राजमाषाश्च कुलत्थ कोरदूषकान् ।
मसूर सितपाकञ्च पुष्पकं शाणमर्कटाः ॥
आढकास्तिलसिद्धार्थीः वस्त्रान्निस्वधनान्यके ।
पिण्याकं परिदग्धा च मथितञ्च विवर्जयेत् ॥
नापि नीरस निर्गन्धं करञ्जं सर्वशक्तुकम् ।
अप्रोक्षितं च यत्किञ्चित् पर्युषितञ्च वर्जयेत् ॥
लोहितान् वृक्षनिर्यासान् प्रत्यक्ष लवणानि च ।
कृताः कृष्णतिला वर्णाः सर्वाः पालाण्डु जातयः ॥
कृष्ण जीरकवंश्याग्रास्तृणानि च विवर्जयेत् ।
कुम्भिकेषु कपालाङ्काः कट्फलं तण्डुलीयकम् ॥
नीलकाचसमच्छत्रा शोभाञ्जन कुसुम्भिकाः ।
कोविदार करञ्जौ च सुमुखामूलकं तथा ॥

कुष्माण्डं गौरवृन्ताकं वृहत्याश्च फलानि च।
करीरफलपुष्पाणि विडङ्गमरिचानि च।
जम्बारिका सुजम्बीरा सुकवी वीजपुरिका:॥
तुम्बालावूनि पिप्पल्यः पटोलं पिण्डमूलकम्।
मसूराञ्जनपुष्पं च श्राद्धे दत्त्वा पतत्यधः॥
विषच्छन्नहतं मांस मन्यच्च चिरसंस्थितम्।
नित्यश्राद्धेऽपि वर्ज्यं स्याद्विट्वराहचकोरयोः।
स्वायम्भुवादिभिः सर्वैर्मुनिभि र्धर्मदर्शिभिः।
निषिद्धानि न देयानि पितृणां महितानि च॥

एकेन किञ्चिदपरेण किञ्चित् किञ्चिच्च किञ्चित्परमस्तु सद्भिः।
श्राद्धे निषिद्धं त्वशनादि विद्वन्! सर्वं पितृणां नतु किञ्च देयम्॥
सौवीरनिङ्कूलवणादिभिः सुपाकस्य शुद्धिर्भवतीह यस्तु।
तद्वीजपूराम्मरिचादियोगात् सिद्धं प्रदेयं नतु दुष्यतीह॥
श्राद्धन्तु यस्य द्विजदीयमानं पित्रादिकस्येह भवेन्मनुष्यैः।
यदि श्रुतस्येह मनस्यभीष्टमासीत् पुरा यस्य तदेव देयम्॥
दातुस्तु यस्मिन् मनसोऽभिलाषः श्रद्धा भवेत्तत्र तु दीयमाने।
श्राद्धेऽपि देयं विधिवत्तदेव तदक्षयञ्चेति इतिप्रवादः॥
आनीतमम्भोनिधिवत्कथञ्चित् तत्पाणिदत्तं भवतीह विद्वन्।।
हेमाम्बुनिक्षेपहरिस्मृताभ्या मच्छिद्रतामेति पराशरोक्तिः॥
क्षीरसारैः क्षयखण्डयोगात् शाखाभिधेयं भवतीह विद्वन्!।
प्राप्यङ्गधूपान् मरिचादियोगात् पाकस्य शुद्धिं प्रवदन्ति तज्ज्ञाः॥

व्रीहयो यवगोधुमा मुद्गा माषास्तिला स्तथा।
नीवारश्यामकाद्यन्न मकृष्टसम्भवानि च॥
शर्करागुड़खण्डानि संशुद्धा क्षौद्रमेव च।

पितृश्राद्धे हविर्मुख्यं यद्वा तद्वास्य लोभतः ॥
यद्देहिना मत्त शरीरपुष्टैर्धाता ससर्जाशननाम किञ्चित् ।
तत्सर्वधान्यान्यमितं ह्यवादि त्रेधा मुनीन्द्रेण पराशरेण ॥
श्यामाशराधादिककङ्कुजावि यत्किञ्चदस्मिन् सुखसाररूपम् ।
अरण्यजं वा कृषिसम्भवं वा सस्यन्तदुक्तं ह्यशनेषु विद्वन् ! ॥
काण्डाद्भवं यत्त्वशनेषु किञ्चित्पङ्केद्भवं वा स्थलसम्भवं वा ।
यत्तुच्छसारं बकराजमस्मिन् सर्वाणि धान्यानि च शूकवन्ति ॥
यत्सर्वसारं सतुदन्तु भक्ष्यं निःशूकस्तूनान्वितमत्त किञ्चित् ।
आप्यायनं देहभृता तु सद्य स्तत्प्रोक्तमन्नं ह्यशनेन सद्भिः ॥

प्रतिस्रुतश्च भुक्तश्च कटु तिक्तश्च यत्तथा ।
केचिदूचुरदेयानि ह्यश्वत्थप्रतिरोपिताः ॥
तुण्डीकरान्यलाबूनि लिङ्गाख्यानि तु यानि तु ।
नित्यं श्राद्धेऽप्यदेयं स्यादाह सत्यवतीपतिः ॥
सोङ्कारया वै गायत्र्या दशावर्तितया जलम् ।
पूतन्तु तेन तत्प्रोक्तं सर्वमन्नविशुद्धये ॥
शुद्धवत्योऽथ कूष्माण्ड्यः पावमान्यस्तरत्समाः ।
पूतेन वारिणैताभि रन्नशोधनमुत्तमम् ॥
तद्विष्णोरिति मन्त्रेण गायत्र्या च प्रदत्तवान् ।
प्रोक्षयेदशनं सर्वम् शूद्रदृष्ट्यादिशुद्धये ॥
परिवेषयेत्समं सर्वं न कार्य्यं पाङ्क्तिभेदनम् ।
पाङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः ॥
आदेशी वेदविक्रेता पञ्चैते ब्रह्मपातकाः ।

यद्येकपङ्क्त्यां विषमं ददाति स्नेहाद्भयाद्वा यदिवार्थलोभात् ।
वेदेश्च दृष्टं ऋषिभिश्च गीतं तद्ब्रह्महत्यां मुनयो वदन्ति ॥

देवान् पितॄन् मनुष्यांश्च वह्निमभ्यागतां स्तथा।
अभ्यर्च्य तु न भुञ्जानो वृथापाक इति स्मृतः॥
एतद्वै ब्राह्मणस्यास्ये जुहोमि चाद्यतोऽमृतम्।
इदं विष्णुरिति ह्येतन्मन्त्रमुच्चार्य्य चापरे॥
द्विजाङ्गुष्ठं च तत्रान्ने निवेशयन्ति तद्विदः।
जप्त्वा व्याहृतिभि र्गायत्रीमधुमतीरिति॥
सङ्कल्पान्न मपोशानं ब्रूयाच्च मधुमध्विति।
आपोशनं प्रदेयान्नं न तत्सङ्कल्पयेद्द्विजः॥
सङ्कल्प्य नरके याति निराशैः पितृभिर्गतैः।
आपोशनो देवपित्रोः पाणौ तिष्ठति यो द्विजः॥
सङ्कल्पं कुरुतेऽज्ञानात् स्वस्तेन पितरो हताः।
जप्त्वाथ वैष्णवान् मन्त्रान् विप्रान् ब्रूयाद्यथासुखम्॥
भुञ्जीरन्वाग्यतास्ते तु पितृदेवर्षितैषिणः।
अत्युष्णमशनं कार्य्यं वचोवाच्यं पितृष्वदः॥
शूद्रश्च शूकरध्वाङ्क्षकुक्कुटानपलापयेत्।
भुञ्जते ब्राह्मणा यावत्तावत् पुण्यं जपेज्जलम्॥
पावमान्यानुवाक्यानि पितृसूक्तानि चैव हि।
ततस्तृप्तान् द्विजान् पृच्छेत्तृप्ताः स्त्वनुशासनम्॥
तृप्ताः स्मेति द्विजा ब्रूयु स्तदन्नं विकिरेद्भुवि।
सकृत् सकृत्पयो दत्त्वा शेषमन्नं निवेदयेत्॥
यथाज्ञानं तथा कृत्वा पिण्डांस्तदनु निर्वपेत्।
यद्यद्भुक्तं द्विजैरन्नं तत्तदादाय विस्तरः॥
स्थालीपाकतिलोपेतं दक्षिणाभिमुखस्ततः।
अवनिज्यतिलान् दर्भान् पिण्डार्थ मवनीतले॥

तस्मिंश्च निर्वपेत्पिण्डान् गोत्रनामकपूर्वकान्।
यदेकलोकं पितृलोकमायुः प्राप्ता स्तथैवं नरकं नरा ये॥
अग्नौ हुतेन द्विजभोजनेन तृप्यन्ति पिण्डे भुवि ते प्रदत्तैः॥
यदन्नं लेपरूपन्तु क्रमात्तेषु च निक्षिपेत्।
प्रक्षाल्य सलिलं वारि अवनेजनवत् पुनः॥
निवृत्तानर्चयेत्पिण्डान् पुष्पगन्धानुलेपनैः।
दीपवासप्रदानेन पितृनर्च्य समाहितः॥
वासो वस्त्रदशां दद्याद्विधिवन्मन्त्रपूर्वकम्।
केचिद्दत्त्वाविकं लोम केचिन्मतं न तत्त्विति॥
पञ्चाशद्वार्षिको यस्तु दद्याल्लोम स्वमंशुकम्।
तदवश्यं प्रदेयं स्याद्विधिसम्पूर्णताकृते॥
पवित्रं यदि वा दर्भं करात्ततोविनिक्षिपेत्।
प्रक्षाल्य हस्तावाचम्य प्रोक्षणादिकमाचरेत्॥
निर्वपन्त्यपरे पिण्डान् प्रागेव द्विजभोजनात्।
खादयेयुः शकुन्तैस्तान् पितृणां तृप्तितत्पराः॥
मातामहानामप्येवं विप्रानाचामयेदथ।
वाक्यातीतद्विजान् स्वस्ति दद्याच्चैवाक्षतोदकम्॥
दक्षिणा हेम देवानां पितृणां रजतं तथा।
शक्त्या दत्त्वा स्वधाकारं व्याहरेत् श्राद्धकृद्द्विजः॥
तिष्ठन् पिण्डान्तिके ब्रूयाद्वाचयिष्ये स्वधामिति।
वाच्यतामिति विप्रोक्तिः प्रवदेद्गोत्रपूर्वकम्॥
स्वधोच्यतामिति ब्रूयादस्तु स्वधेति तद्वचः।
ऊर्जं वहन्ति उच्चार्य्य जलं पिण्डेषु सेचयेत्॥
याः काश्चिद्देवताः श्राद्धे विश्वशब्देन जल्पिताः।

प्रीयतामितिच ब्रूयात् विप्रैरुक्तमिदं जपेत् ।
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेवच ॥
श्रद्धा च नो मा व्यगमद् बहुदेयञ्च नोऽस्त्विति ।
न्युब्जपिण्डार्घ्यपात्राणि कृत्वोत्तानानि संस्रवान् ॥
क्षिप्त्वा पिण्डेष्वतो विप्रान् पितृपूर्व्वं विसर्जयेत् ।
वाजे वाजे इति ह्युक्त्वा आमावाजस्य तान् वहिः ॥
ब्रूयात्प्रदक्षिणीकृत्य तथा क्षमध्वमित्यपि ।
पिण्डानां मध्यमं पिण्डं पितॄन्ध्यायं समाहितः ॥
प्राशयेत् पुत्रकाम्या तु भार्य्या तच्छ्राद्धदस्य तु ।
स्नुषा वापि सगोत्रा वा पुत्रकामा द्विजाज्ञया ।
आधत्त पितरो गर्भं व्याहरेयुर्द्विजातयः ॥
महारोगगृहीतोवा तद्रोगोपशमाय च ।
अत्तु मे पितरो रोगमित्युक्त्वा प्राशयेद्धितम् ॥
अन्यानप्सु कृशाग्रे वा क्षिपेद्दद्याद्द्विजाय वा ।
अजाय वा प्रदद्यात्तु पश्चाद्विप्रविसर्जनम् ॥
उद्वाहं पितृकादेके पाकान्मातामहाय तु ।
एकेनैव हि गच्छन्ति भिन्नगोत्रा स्तथा द्विजाः ॥
अद्दैवेऽथ्यस्थाने तु वक्तव्युमुपतिष्ठताम् ।
अभिरम्यतां स्वधास्थाने विप्रोक्तिरभिरताः स्म ह ॥
ऊर्ध्वन्तु प्रोष्ठपद्यास्तु प्रतिपदादिकाश्च याः ।
पुण्यास्तास्तिथयः सर्वाः दशापि सह पञ्चभिः ॥
तेषाञ्चतुर्दशी प्रोक्ता शास्त्रेणापहृता नराः ।
पितृभ्यश्च त्रयोदश्यां गयाश्राद्धाधिकं फलम् ॥
न तत्र पातयेत्पिण्डान् सन्तानेप्सुः कदाचन ।

पिण्डदानेन कवयो वंशच्छेदं वदन्ति हि ॥
सन्तानेप्सुस्त्रयोदश्यां न पिण्डान् पातयेन्नरः ।
पातयेन्न मतीक्ष्येव प्राह सत्यवतीपतिः ॥
मघायुक्तत्रयोदश्यां पिण्डनिर्वपणं द्विजः ।
ससन्तानो नैव कुर्य्यादित्यन्ये कवयो विदुः ॥

य: संक्रान्ते भानुदिने च कुर्य्यात्
विशेषणं पारणकं द्विजन्मा ।
पिण्डप्रदानं पितृमेच तद्वत्
ज्येष्ठे प्रपद्ये : सुतोऽनुजो वा ॥

पुत्रदा पञ्चमी कर्त्तुस्तथैवैकादशी तिथिः ।
सर्वकामा त्वमावास्या पञ्चस्यर्थं शुभा स्मृता ॥
अन्नक्षीरघृतं क्षौद्रमैक्षवङ्कावशाकवत् ।
एतैस्तु तर्पितैर्विप्रैस्तर्पिताः पितरो नृणाम् ॥
देशः पर्वञ्च कालश्च हविःपात्रे च शक्तितः ।
पितृदैविकचित्तत्वं योगश्चेत् पितृभादिभिः ॥
शौचञ्च पात्रशुद्धाच श्राद्धञ्च परमा यदि ।
अनन्ततृप्तिकृच्छ्राद्धे एतत् खलु नचामिषे ॥
यस्तु प्राणिवधं कृत्वा मांसेन तर्पयेत् पितॄन् ।
सोऽविद्वांश्चन्दनं दग्ध्वा कुर्य्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे तथा किञ्चिद्वाल आदातुमिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥
सर्वथान्नं तथा न स्यात्तदैवामिषमाश्रयेत् ।
ब्राह्मणश्च स्वयं नाद्यात्ततः स्वादिहतं यदि ॥
अथान्यत्पापमृत्यूनां शुद्ध्यर्थं श्राद्धमुच्यते ।

कृतेन तेन येषान्तु प्रवृत्तमुपतिष्ठति ॥
दन्तिशृङ्गिगरव्याल निरग्निबन्धनैस्तथा ।
विद्युन्निर्घातवृत्तैश्च विप्रैश्च स्वात्मना हताः ॥
प्राणसञ्जातकीटाश्च म्लेच्छैश्चैव हतास्तथा ।
पापकृत्यव एवैते शुभगत्यर्थमुच्यते ।
नारायणवलिः कार्य्यो विधानन्तस्य उच्यते ।
ऊर्द्ध षण्मासतः कुर्य्यादेक ऊर्द्धन्तु वत्सरात् ॥
तेषां चैव व्यपोहार्थं कार्य्यो नारायणो वलिः ।
धौतवासाः शुचिः स्नात एकादश्यामुपोषितः ॥
शुक्लाद्येतु संपूज्यो विष्णुमीशं यमन्तथा ।
नदीतीरं शुचिर्गत्वा प्रदद्याद्दश पिण्डकान् ॥
चौद्राज्यतिलसंयुक्तान् हविषा दक्षिणामुखः ।
अभ्यर्च्च पुष्पधूपाद्यैः पुन्नामगोत्रपूर्वकान् ॥
विष्णुध्यानमनाः कुर्य्यात् ततः स्नानाम्भसि क्षिपेत् ।
निमन्त्रयीत विप्रांश्च पञ्च सप्ताथ वा नव ॥
द्वादश्यां कुतपे स्नातान्धौतवस्त्रान् समागतान् ।
हर्षाराधनकुद्दत्या प्रक्षालिताङ्घ्रियुग्मकान् ॥
दक्षिणाप्रवणे देशे शुचिस्तानुपवेशयेत् ।
दैवे द्वौ तु त्रयः पित्र्ये प्राङ्मुखोदङ्मुखान् द्विजान् ॥
आसनावाहनार्घ्यञ्च कुर्यात् पार्वणवद्द्विजः ।
भोजयेद्भक्ष्यभोज्यैश्च क्षौद्रैर्घृताज्यपायसैः ॥
तृप्तान् कृत्वा ततो विप्रान् तृप्तिङ्गच्छेद्यथाविधि ।
भोज्येन तिलमिश्रेण हविष्येन च तान् पुनः ॥
पञ्च पिण्डान् प्रदद्याद्वै दैवरूपमनुस्मरन् ।

विष्णु ब्रह्मशिवेभ्यश्च त्रीन् पिण्डांश्च यथाक्रमम् ॥
यमाय सानुगायाथ चतुर्थं पिण्डमुत्सृजेत् ।
मृतं संचिन्त्य मनसा गोत्रनामकपूर्वकम् ॥
विष्णुं स्मृत्वा क्षिपेत् पिण्डं पञ्चमञ्च ततः पुनः ।
दक्षिणाभिमुखश्चैव निर्वप्य पञ्च पिण्डकान् ॥
आवाह्य ब्राह्मणान् पश्चात् प्रोक्षणादिकमारभेत् ।
हिरण्येन च वासोभिर्गोभिर्भूम्याच तान् द्विजान् ॥
प्रणम्य शिरसा पश्चाद्विन्येन प्रसादयेत् ।
तिलोदकं करे दत्त्वा प्रेतं संस्मृत्य चेतसि ॥
गोत्रपूर्वं क्षिपेत्पाणौ विष्णुं बुद्ध्या निवेश्यच ।
वहिर्गत्वा तिलाम्भस्तु तस्माद्दद्यात्समाहितः ॥
मित्रभृत्यैर्निजैः सार्धं पश्चाद्भुञ्जीत वाग्यतः ।
एवं विष्णुमते स्थित्वा यो दद्यात्पापकृत्यवे ॥
समुद्धरन्ति तं प्रेतं पराशरवचो यथा ।
सर्वेषां पापकृत्यूनां कार्यो नारायणो वलिः ॥
तस्मादूर्ध्वञ्च तेभ्योहि प्रदत्तमुपतिष्ठते ।
एवं श्राद्धैः समस्तान्यः सन्तर्पयति वै पितॄन् ॥
दद्युस्तानुत्तमांस्तस्य पितरस्तर्पिताः परान् ।
विद्यातपोसुखान् पुत्रान् पूज्यत्वमथ योषितः ॥
सौभाग्यैश्वर्यतेजश्च बलं श्रेष्ठमरोगताम् ।
यशःशुचित्वकुप्यानि सिद्धिञ्चैवात्मवाञ्छिताम् ॥
यशस्वन्दीर्घमायुश्च तथैवानुमतं मतिम् ।
अथान्यत् किञ्चिदाख्यामि पितॄणान्तु हिताय वै ॥
कृतेनैव स्वल्पेनापि प्राप्नुवन्ति विधेः फलम् ।

उच्छिष्टस्य विसर्गार्थं विधिस्तात्कालिको हि यः ॥
श्राद्धज्ञैर्विहितं यत्प्राक् पितृगणहितैषिभिः।
आदाय सर्वमुच्छिष्टमवनेजनवद्बुधः ॥
तत्रैव भक्षयेद्भूमौ तिलदर्भसमन्वितम्।
नरकेषु गता ये वै अल्पमृत्युमृता मम ॥
एतदाप्यायनन्तेषां चिरायैतद्ब्रवीन्मनुः।
करस्य मध्यतो देवाः करपृष्ठे तु राक्षसाः ॥
पात्रस्यालम्भनादौच तस्मात्तन्न प्रदर्शयेत्।
दर्भाश्च स्वयमानेया दक्षिणाप्रवणोद्भवाः ॥
तर्पणाद्युच्छिता ये वै हृत्याद्याश्च विसर्जयेत्।
न कुशङ्कुशमित्याहुर्दर्भमूलं कुशः स्मृतः ॥
छिन्नदर्भा इति प्रोक्ता तदग्रं कुतपः स्मृतः।
हरिता याज्ञिका दर्भाः पीतकाः पाकयाज्ञिकाः।
सकुशाः पितृदैवत्यच्छिन्ना वै वैश्वदेविकाः ॥
दर्भमूले स्थितो ब्रह्मा दर्भमध्ये जनार्दनः।
दर्भाग्रे शङ्करस्तस्मौ दर्भाः देवत्रयान्विताः ॥
अहन्येकादशे श्राद्धे प्रतिमासं तु वत्सरम्।
प्रतिसम्वत्सरं कार्यमेकोद्दिष्टं तु सर्वदा ॥
एकस्य प्रथमं श्राद्धमर्वागब्दाच्च मासिकम्।
प्रतिसम्वत्सरञ्चैव शेषत्रिपुरुषं स्मृतम् ॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं सुतैः।
एकोद्दिष्टं प्रकुर्वीत पित्रोरप्यत्र पार्वणम् ॥
सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं द्विजैः।
मातापित्रोः पृथक्कार्यमेकोद्दिष्टं क्षयाहनि ॥

अथातः सम्प्रवक्ष्यामि कोटिहोमविधिं द्विजाः !।
श्रूयतामादरेणायं सर्वकामफलप्रदः॥
सानुष्ठाना द्विजाः प्रोक्ता ऋत्विजा यागकर्मणि।
विधिज्ञाश्चैव मन्त्रज्ञाः स्वदारनिरताश्च ये।
कार्यश्चैव विशेषेण ग्रहयागविधिर्विदः !॥
एकाङ्गविकलो विप्रो धनधान्यापहारकः।
सर्वाङ्गविकलो यस्तु यजमानं स हिंसति॥
वर्ज्यः सर्वप्रयत्नेन विधिमन्त्रज्ञविद्द्विज !।
कार्यश्चैव विशेषेण ग्रहयज्ञश्च विद्द्विजैः॥
ग्रहाः फलन्तु साङ्गाश्च सुराश्चैव नरेश्वराः।
अधीष्वं येच मन्त्राणां कृत्वा चाष्टोत्तरं शतम्॥
स एव ऋत्विग्विज्ञेयः सर्वकामफलप्रदः।
आवाहनीयो यत्नेन प्रणिपत्य मुहुर्मुहुः॥
एवं कृते तु यत्किञ्चिद्दुष्टग्रहपीडासमुद्भवम्।
तत्सर्वं नाशयेत्येव कृतघ्नः सौहृदं यथा॥
अस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयम्भुवा।
आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च॥
पूर्ववद्ग्रहदेवाना मावाहनविसर्जने।
होममन्त्रास्त एवोक्ताः स्नानदानन्तथैव च॥
मण्डपश्चैव वेद्याश्च विशेषश्च निबोधत।
कोटिहोमे चतुर्हस्तं चतुर्हस्तायतं पुनः॥
योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम्।
द्व्यङ्गुलोद्धृतकार्याच प्रथमा मेखला बुधैः॥
त्र्यङ्गुलैरुद्धृतातद्वद्द्वितीया मेखला स्मृता।

उद्गमे मेखला या तु तृतीया चतुरङ्गुला ॥
चतुरङ्गुलस्तत्र विस्तारः पूर्वयोरेव शस्यते ।
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता ॥
कूर्मपृष्ठोन्नतं मध्ये पार्श्वतश्चाङ्गुलोन्नता ।
गजोष्ठसदृशा तद्वदायामाच्छिद्रसंयुता ॥
एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते ।
मेखलोपरि सर्वत्र अश्वत्थपत्रसन्निभाम् ॥
वेदीच कोटिहोमे स्यान्मण्डपस्य चतुर्मुखः ।
पूर्वद्वारेऽपि संस्थाप्य बह्वृचं वेदपारगम् ॥
यजुर्वेदं तथा याम्ये पश्चिमे सामवेदिनम् ।
अथर्ववेदं तद्वच्च उत्तरे स्थापयेद्बुधः ॥
अष्टौ तु होमकाः कार्या वेदवेदाङ्गवेदिनः ।
एवं द्वादशविप्राणां वस्त्रमाल्यानुलेपनैः ॥
पूर्ववत् पूजयेद्भक्त्या सर्वाभरणभूषितैः ।
रात्रिसूक्तञ्च रौद्रञ्च पावमानन्तु मङ्गलम् ॥
पूर्वतो बह्वृचः शान्तिं पठमानोह्युदङ्मुखम् ।
सौक्तं रौद्रञ्च सौम्यञ्च कूष्माण्डं शान्तिमेव च ॥
पाठयेद्दक्षिणे द्वारे यजुर्वेदिनमुत्तमम् ।
सौवर्णमथ वै राज्य माग्नेयीं रुद्रसंहिताम् ॥
ज्येष्ठसामन्तथा शान्तिं च्छन्दोगं पश्चिमे जपेत् ।
पञ्चभिः सप्तभिर्वाथ होमः कार्यश्च पूर्ववत् ॥
स्नाने दाने च मन्त्राः स्यु स्तएव द्विजसत्तमाः !
वसोर्धाराविधानन्तु लक्षहोमवदिष्यते ॥
अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।

सर्वान् कामानवाप्नोति ततो विष्णुपुरं व्रजेत् ॥
यः पठेत् शृणुयाद्वापि ग्रहयागमिमं नरः ।
सर्वपापविशुद्धात्मा पदमैन्द्रं स गच्छति ॥
अश्वमेधसहस्रञ्च दश चाष्टौ च धर्मवित् ।
कृत्वा यत् फलमाप्नोति कोटिहोमात्तदश्नुते ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च ।
नश्यन्ति कोटिहोमेन स्वयम्भूवचनं यथा ॥

प्रपेदिरे तस्य पितामहाद्याः शुभेषु पापेन गरीयसा तान् ।
उद्धृत्य नाकं स नयेद्धि सर्वान्यो लक्षहोमे नृपतीरतः स्यात् ॥
राष्ट्रं मनोवाञ्छितवृष्टियुक्तं धान्यैश्च रत्नैः पशुभिः समेतम् ।
निर्द्वन्द्वनीरोगमदस्यु तस्माद्यो लक्षकोटीहवनं विदध्यात् ॥
यो लक्षहोमं विदधाति भूभृत् तद्व्यलक्षं शतहोमकः स्यात् ।
प्रत्यब्दमाप्नोति स दीर्घमायुर्भुङ्क्ते सपत्नान् विजयेत् धरित्रीम् ॥
यो ब्रह्मघाती गुरुदारगोऽपि ग्रामाविदाहोद्भवपापयुक्तः ।
राजा स मुक्तः शतलक्षहोमाच्छेषपापैर्विबुधत्वमेति ॥
तस्मात्तदा भूपतयो विदध्युर्वृष्टीः प्रजासौख्यबलस्य पुष्ट्यै ।
आयुःप्रवृद्धौ विजयाय कीर्त्त्यै लक्षस्यहोमे ग्रहयोगमेतम् ॥

इति श्रीबृहत्पाराशरीये कोटिहोमः सम्पूर्णः ॥

---

अथो अन्यत्प्रवक्ष्यामि विधिम्पावनमुत्तमम् ।
अस्मत्तातप्रतातोऽयं रघुपुत्राय धीमते ॥
अनपत्यस्य पुत्रार्थं कुर्याद्वैभाण्डिकं स्वयम् ।
सहस्रशीर्षसूक्तस्य विधानञ्चरुपाककम् ॥

यैः कृतं नृपैः पूर्वै रन्यैरपि द्विजोत्तमैः।
उपासितन्तु सङ्कल्पा श्रोत्रियैर्वेदगारगैः॥
आत्मविद्भिर्निराहारै र्व्रीहिभि र्मन्त्रउत्तमैः।
क्रियमाणाः क्रियाः सर्वाः सिध्यन्ति व्रतचारिभिः॥
न पाठान्न धनात् स्नानात् नात्मनः प्रतिपादनात्।
प्रोक्तस्य कर्मणः पुंसां सर्वा भवन्ति सिद्धयः॥
शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे।
द्वादश्यां पुत्रकामाय संकुर्वन्ति च वैष्णवम्॥
दम्पत्योरुपवासश्च ह्येकादश्यां सुरालये।
ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम्॥
चरुं पुरुषसूक्तेन श्रपयेत् पुरुषकाम्यया।
प्राप्नुयाद्वैष्णवं पुत्रं चिरायुः सन्ततित्तमम्॥
द्वादश्यां द्वादश सम्यग् विधिवन्निर्वपेच्चरून्।
यः करोति इहायाति स विष्णोः परमं पदम्॥
हुत्वाज्यं विधिवत्पूर्वं ऋग्भिः षोडशभिस्तथा।
समिधोऽश्वत्थवृक्षस्य हुत्वाज्यं जुहुयात् पुनः॥
उपस्थानं ततः कुर्यात् ध्यात्वाच मधुसूदनम्।
हविर्होमं पुनः कृत्वा जुहुत्यश्च घृताहुतीः॥
हविःशेषं नमस्कृत्य नारी नारायणं पतिम्।
संप्राश्य च हविःशेषं लघ्वासीत वसेद्गृहे॥
ततः कृत्वा इदं कर्म कर्त्तव्यं द्विजतर्पणम्।
रजः स्त्रीषु निवर्तेत यावद्गर्भं न विन्दति॥
असूता मृतपुत्रा वा यावत्कन्या प्रसूयते।
क्षिप्रं सा जनयेत् पुत्रं पराशरवचो यथा॥

होमान्ते दक्षिणान्दद्यात् धेनुं वासस्तथा तिलान्।
भूमिं हिरण्यं वस्त्राणि यथासम्भवमेव वा ॥
यः सिद्धमन्त्रः सततं द्विजेन्द्राः! संपूज्य विष्णुं विधिवत्सुतीर्थे।
इमं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरेः प्रसादात्॥
इति श्रीवृहत्पाराशरीये शान्त्यध्याये पुत्रकामोऽयं पुरुषसूक्तविधिः सम्पूर्णः ॥

अथातः सम्प्रवक्ष्यामि ग्रहमन्त्रोऽधिदैवतम्।
आर्षञ्छन्दश्च यज्ज्ञानात्कर्म स्यात्सुमलङ्कृतम्॥
आकृष्णेनेति मन्त्रेऽस्मिन्दैवत्यं सविता महत्।
ऋषिर्हिरण्यरूपाख्यं त्रिष्टुप्छन्दः प्रकीर्तितम्॥
आप्यायस्वेति सोमोऽत्र दैवतं गौतमो मुनिः।
गायत्रीच्छन्द उद्दिष्टं विनियोगो यथोदितम्॥
अग्निमूर्द्धेति मन्त्रोऽत्र दैवतं भौममुच्यते।
विरूपाक्षो मुनिर्धीमान् छन्दोगायत्र्य मिष्यते॥
उद्बुध्यस्वेति मन्त्रस्य बुधश्चैव तु दैवतम्।
मुनिर्बुधश्च मन्त्रस्य त्रिष्टुप्छन्दः प्रकीर्तितम्॥
शुक्रत्वमिति होत्यत्र शुक्र इत्यधिदैवतम्।
शुक्रस्यापि तथार्षञ्च विराट्छन्दः प्रकीर्तितम्॥
शन्नो देवीतिचेत्यत्र शनिदैवत मुच्यते।
सिन्धुर्नाम मुनिर्विद्वान् छन्दोगायत्र्य मुच्यते॥
काण्डात्काण्डादिभिर्मन्त्रस्य राहुर्दैवत मुच्यते।
ऋषिः प्रजापतिः प्रोक्तोऽनुष्टुप्छन्दः प्रकीर्तितम्॥
केतुं कृण्वन्निति प्रोक्तं दैवतं केतुरेव हि।
मधुच्छन्दस आर्षञ्च गायत्र्यं छन्द एव हि॥

स्योना पृथिवीत्यत्र छन्दस्य देवता स्मृता ।
इन्द्रकुत्सेति दैवत्य मिन्द्र एव स्मृतो बुधैः ॥
आर्षन्तत्सस्य चापुत्र स्त्रिष्टुप्छन्दः प्रकीर्तितम् ।
यस्मिन्वृक्षेति ह्येत्यत्र यमोवै देवता परा ॥
ऋषिस्तु कुसमलो नाम छन्दोऽनुष्टुप् स्मरेद्बुधः ।
ब्रह्मजज्ञमित्यत्र च कालो दैवतकं महत् ॥
मुनिर्यमानतुर्नाम त्रिष्टुप्छन्दो विधीयते ।
आयाते मितिच ह्यस्यां चित्रगुप्तस्तु दैवतम् ॥
आर्षन्तु वामदेवस्य त्रिष्टुप्छन्दो ह्ययो बुधैः ।
अग्निं दूतमितिह्य स्यादग्निर्वै देवता स्मृता ॥
आर्षं मेधातिथेरत्र छन्दोगायत्र्यमेव हि ।
अस्त्रस्तु सोम इत्यत्र सोमं वैदैवतं स्मरेत् ॥
मेधातिथिरिहाप्यर्कोऽनुष्टुप्छन्दस्व उच्यते ।
भूतिपृथिव्यन्तरिक्ष मित्यत्र दैवतं चिंतितः ॥
ऋषिः शातातपः स्मृत्वा छन्दश्चानुष्टुकुच्यते ।
पुरुषसूक्तस्य दैवत्यं पुरुषेच हितं बुधैः ॥
आर्षं नारायणस्येह छन्दश्चानुष्टुवित्यपि ।
इन्द्रोपेन्द्रौ मरुत्वन्तो मरुत्वान्दैवतं महत् ॥
आर्षन्तु काश्यपस्येह गायत्र्यच्छन्दएव हि ।
मरुत्वन्नित्यत्रबुधैः सुरेन्द्रो देवता मता ॥
अत्रापि कश्यपस्यार्षं गायत्र्यच्छन्दएव हि ।
उत्तानपर्णं मित्यत्र इन्द्रो दैवत मुच्यते ॥
आर्षं साङ्कस्य चैवोक्तम् अनुष्टुप्छन्द इत्यपि ।
प्रजापते इति ह्यत्र देवता च प्रजापतिः ॥

हिरण्यगर्भस्यार्षन्तु त्रिष्टुप्छन्दो मतं बुधैः।
आयं गौरिति च्चात्र देवता पूजने मता॥
सर्पराजमुनिर्ह्यत्र गायत्र्यं च्छन्द इष्यते।
एष ब्रह्मा ऋत्विज इति ब्रह्मद्विषोऽधिदैवतम्॥
ऋषिर्वै वामदेवोऽत्र गायत्र्यच्छन्द इष्यते।
आतन्वन् इन्द्रष्टदवृत् सुरेन्द्रं शर्मणोश्वरः॥
वामदेवोह्यस्य आर्षं गायत्र्यच्छन्द इत्यपि।
जातवेदस इत्यत्र जातवेदास्तु दैवतम्॥
कश्यपस्यार्षमत्रापि च्छन्दोऽनुष्टुप्‌ प्रकीर्तितम्।
आनोनियुद्भिरित्यस्मिन् वायु दैवतमुच्यते॥
आर्षञ्चात्र वसिष्ठस्य अनुष्टुप्च्छन्द एव हि।
नमः प्रकाशदैवत्यं मुनिप्रोक्तं प्रजापतिः॥
गायत्र्यं च्छन्दसाश्वरं विनियोगो यथोचितम्।
ईषो उपेति चात्यत्र अश्विनौ दैवते स्मरेत्॥
प्रस्कण्वस्यार्षमत्रापि गायत्र्यच्छन्द उत्तमम्।
मरुतो यस्य हिष्यस्य मरुद्दैवत मुच्यते॥
गौतमश्च मुनिर्विद्वन्! च्छन्दसः प्रथमं मुने!।
दैवत्य मार्षं सह्च्छन्दसां यो मत्वाहिजाशाकु रुते विधानम्।
वेदोक्तमर्थं भवतिस्म सर्वं सम्यक्फलं कर्त्तुमिहाप्यमुत्र॥
यो लक्षहोमं ह्ययुत कोटिहोमं राजा विदध्यात्प्रतिवर्षमेकम्।
राष्ट्रे सुवृष्टिर्विजयः सुभिक्षम् आरोग्यता स्यात् सुकृतस्य वृद्धिः॥
भवन्ति पुत्राः शुभसन्तति श्चमाश्चिरायुषो राजहिता धरित्र्याम्।
सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रविचन्द्रतुल्याः॥
इति श्रीबृहत्पाराशरीये शान्तिविधिर्नाम नवमोऽध्यायः।

# दशमोऽध्यायः ।

अयातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया ।
पराशरोदितं विप्रा ! वक्ष्यमाणं निबोधत ॥
भूभृत् भूमा परो देवपूज्योऽसौ परदेवकः ।
स विधाता च सर्वस्य रक्षिता शासितापि च ॥
इन्द्रादियमवित्तेशवारीशमातरिश्वनः ।
शीतांशुस्तीव्रभासश्च ब्रह्माद्यो द्विजो नृपः ॥
नृपो वेधा नृपः शम्भु र्नृपोऽर्कौ विष्टरश्रवाः ।
दाता हर्त्ता नृपः कर्त्ता नृणां कर्मानुसारतः ॥
नापृच्छेद्यदि राजानं दण्डं नाप्याचरिष्यतः ।
नामास्या क्षमेष्यतिच नाभविष्यज् जगत्स्थितिः ॥
नार्चिष्यन् पुरोडाशान्मनुष्यपितृदेवताः ।
नाभविष्यत् श्वकाकानां भागधेयं हुतं हविः ॥
विगुणोऽपि यथा पूज्यः स्त्रियाश्च सत्पतिर्भवेत् ।
तथा राजा प्रजानान्तु पूज्यः स्याद्विगुणोऽपि सन् ॥
स्वधर्मस्थान् नृपो लोका नन्यान् पुत्रानिवौरसान् ।
शास्त्य धर्मविदोदण्ड मधर्मकारिणश्च तान् ॥
दण्डधृतो नरान् कुर्य्याद्धर्मज्ञानार्थसाधकान् ।
समर्थानक्षपत्यादौ शूरान् स्वामिहितोद्यतान् ॥
शुचीन् प्रज्ञांश्च धर्मज्ञान् विप्रान् मुद्राकरान्विदान् ।
लेखकानपि कायस्थान् लेख्यकृत्तु हितैषिणः ॥
अमात्यान्मन्त्रिणो दूतान्ययोदितपुरोहितान् ।
प्राड्विवाकं समस्तान्वा हितांश्च रक्षकानपि ॥

शूरानथ शुचीन् प्रज्ञान् परिविश्वासकारिणः।
सर्व्वस्थानेषु चाध्यक्षं सत्कृत्य वेदिनोऽपरे ॥
मदायत्तं कुमाराणां मन्तःपूर्वं लक्षणम्।
वृद्धानशुचिनो विप्रां स्त्र्युचीननर्थान्न भीरुकान्॥
यथोदितानि दुर्गाणि कुर्य्युस्ते परिरक्षणम्॥
उद्वाहमुदितं स्त्रीणां यौवने बन्धुकारणात्।
पुरस्कृत्य च विज्ञान मात्मरक्षा च यत्नतः॥
प्रातः सन्ध्यार्चनादूर्द्ध्वं गुडं पुंसवनं स्मृतम्।
यथोक्तकार्य्ये शाठ्ये च नित्यं कुर्य्यात् परीक्षणम्॥
कोशभाण्डारधाद्दीनां हेतीनां वर्मणामपि।
कुर्य्याच्च दर्शनं नित्यं सतन्द्रितो महीपतिः॥
अमात्यमन्त्रयोक्तृणां सन्मन्त्रं नित्यशोऽपि च।
वेदार्थञ्च सदा होमशान्तिञ्च वृद्धसेवनम्॥
यज्ञदानं तथोत्पातं समये शान्तयोऽपि च।
वर्जनं विषयासक्तो भूमिदानस्य शासनम्॥
अत्रिवर्जितदेशे तु नीतिज्ञो मन्त्रकृद्भवेत्।
नित्यमुत्साहयुक्तः स्याद् विजिगीषु रुदायुधः॥
सदालङ्कारयुक्तश्च सदैव प्रियवाक्वयः।
सदाप्रियहिते युक्तः पूज्यो नाकेऽप्यसौ नृपः॥
सदा साधुषु सन्मानं विपरीतेषु घातनम्।
दण्डं दण्ड्येषु कुर्वाणो राजेष्टिफलमश्नुते॥
वृद्धान् साधून् द्विजान् मौलान् यो न सन्मानयेन्नृपः।
पिण्डं कुर्व्वीत नामीषां भूभृत् क्षिप्रं क्षयं व्रजेत्॥
यस्तु सन्मानयेदेतान् नित्यं विप्रांश्च पूजयेत्।

पराजयेत सोऽरातीनजेयोऽप्यपि जायते ॥
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्चोरतस्करैः।
धान्येतुतृणतोयैश्च सम्पन्नं परमण्डलम् ॥
हीनवाहनपुष्टन्तु मत्वा तत्प्रविशेन्नृपः।
मार्गे सहसि यात्रार्थी कृतपुण्यश्च पोषवान् ॥
विधित्रदूयानकं कुर्य्यात् सहार्थे रक्षयेद्बलम्।
यत्राचलसरोरक्षा दुर्गरक्षातु यत्र तु ॥
वासं तत्र विधायैव रात्रौ रक्षेद्बलं स्वकम्।
चतुर्दिक्षु च सैन्यस्य शूरान्धनुर्धरान्निशि ॥
स्वयं राजा नियुञ्जीत समीक्ष्य भूबलाबलम्।
राज्यस्य षड् गुणान् मत्वा सन्धिविग्रहयानकान् ॥
आसनं संश्रयं द्वैधं सम्यक्ज्ञात्वा समाचरेत्।
निर्भेदं स्वबलं कुर्य्यात् हत्याच्च भिन्नचेतसा ॥
दासीकर्मकरान् दासान् भिद्यन्ते न क्षयेन्नृपः।
निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः ॥
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी।
ये ते परस्य यत्नेन भेदनीयास्ततोऽपरे ॥
यथा परो न जानाति तथा भेदं समाचरेत्।
परमात्मविधानानां व्यलीकहृतशङ्कितम् ॥
उत्थापयेत् स्वसेनायाः स्याद्यताचित्तभेदिनः।
परसैन्ये बहून् पातान् विविधान् कुहकानपि ॥
करीषाङ्गारदानादि वह्निपातानतेकशः।
स्वसैन्येऽभवदित्यादि नृपो यत्नेन रक्षयेत् ॥
नियुज्य यद्धपुरुषान् नक्तं सर्वं निशामयेत् ॥

अन्तर्भीरून् बहिः शूरान् साग्निकान् ब्राह्मणोत्तमान् ।
धर्मज्ञान् कुलसम्भूतान् विदध्यादात्मसन्निधौ ॥
प्रविशेत्परदेशे तु प्रजां स्वीकृत्य संविशेत् ।
उत्पाद्यं मार्गतो दूरीकृत्वापि मार्गतो व्रजेत् ॥
शस्यानि दाहयेत्सर्वं सयवानि धनानि च ।
भिन्द्यात्सर्वं निपानानि प्राकारं परिखां तथा ॥
अपमृत्युमुपादाय भूमिसाधारणां पुनः ।
गमयेद्वार्षिकान् मासानसौ च वसुधानृपः ॥
न युद्धमाश्रयेत् प्राज्ञो न कुर्य्यात् स्वबलक्षयम् ।
न प्रभेदेन दानेन त्रिभिरेवं वशं नयेत् ॥
वदन्ति सर्वे नीतिज्ञा दण्डस्यागतिका गतीः ।
तद्वशं वशमायाति यथा रिपुस्तथा श्रयेत् ॥
आक्रान्ता दर्भसूच्योऽपि विद्युद्दूरप्रोपपातनम् ।
न तापित युक्तं च युद्धसिद्धौ अरसिद्धिवत् ॥
स्वस्थस्यात्ययिके देशे युद्धमिच्छेत् स्वधर्मवित् ।
ततः प्रविश्य तद्दूरं भूमियुद्धं समारभेत् ॥
किञ्चित् सुप्तेषु लोकेषु क्षपायां यद्वमुत्सृजेत् ।
सन्नीरवासतीवापि पीड़येत्परसैन्यकम् ॥
व्यूहैर्व्यूहयथोक्तैर्वा रक्षां कृत्वापि चात्मनः ।
सैन्यकांस्तान् समस्तांश्च नृपो युद्धाय प्रेषयेत् ॥
समानयेत् समस्तांश्च यो वसेदायतौ नृपः ।
अन्विच्छन् जयलक्ष्मीं तु नीतिज्ञः पृथिवीपतिः ॥
प्रणाशेनापि पत्या च शय्यास्थोऽपि च मानवः ।
पुष्पैरपि न युद्धेत युद्धं तत्र विपत्तये ॥

हीनं परबलं मत्वा निरुत्साहमनादरम्।
समस्तबलसंयुक्तः स्वयमुत्थाप्य योधयेत्॥
न हन्यात् मुक्तकेशन्तु नाशयेन्न निरायुधम्।
पराङ्मुखञ्च प्रहतं न तवास्मीति वादिनम्॥
अन्यानपि च विद्वांश्च न हन्यात् धर्मयुद्धकृत्।
हन्यात्तेन्नरकं याति भ्रूणहत्यासमेनसा॥
पराङ्मुखीकृते सैन्ये यो युद्धान्न निवर्त्तते।
तत्पदानीष्टितुल्यानि भूत्यर्थमेकचेतसः॥
शिरोहतस्य ये वक्त्रे विशन्ति रक्तविन्दवः।
सोमपानेन तत्तुल्या इति वासिष्ठजोऽब्रवीत्॥
युद्ध्यन्ते भूभृतो येच भूम्यर्थमेकचेतसः।
इष्टैस्तैर्बहुभिर्योगैरेवं यान्ति त्रिविष्टपम्॥
येषु एवापरो धर्मो नृपतेर्यद्रणार्जितम्।
वित्तन्दीयेत विप्रे स्यात् प्रजाभ्यश्चाभयं सदा॥
तदा तु वशतां याति स देशो न्यायतोऽर्जितः।
तद्देशव्यवहारेण यथावत्परिपालयेत्॥
रणार्जितेन वित्तेन राजा कुर्य्यान्मखान् द्विजान्।
अर्चयेद्विधिवद्विद्वान् सतान् सन्मानयेदपि॥
मातुलः श्वशुरो बन्धु रन्यो वापिच यो जितः।
अदण्ड्यः कोऽपि नो राजा राजनीतिविदो विदुः॥
सुसहायमप्रमादं शूरं प्रज्ञानुरागदम्।
सोत्साहं विजिगीषुञ्च भूभृत् क्षिप्रं निवेदयेत्॥
मत्वाचार्य्यवतः सर्वान् नियुक्तार्थनियुग्भवेत्।

सार्थकांश्चैव युञ्जीत सर्वतोऽर्थमुपार्जयेत् ॥
सर्वाण्यपि च वित्तानि यतस्ततोऽपि राजनि ।
नृपस्य यदि जातानि देवद्रव्याणि कोशवत् ।
आदाय रक्ष्य चात्मान ततस्तत्र च तत् क्षिपेत् ॥
वित्तं वार्द्धुषिकाणान्तु कदर्थस्यापि यद्भवेत् ।
पाषण्डिगणिकावित्तं हरन्नातो न किल्बिषी ॥
देवब्राह्मणपाषण्डिगणका गणिकादयः ।
वणिग्वार्धुषिकाः सर्वे स्वस्वे राजनि सुस्थिताः ॥
सप्तार्चिश्चाश्वगोमांसान् यस्य दहत्यकिल्बिषी ।
गृह्णीयात् सर्वतो राजा करान् यः पीड़येत् प्रजाः ॥
स्तोकं स्तोकन्तु फलकं मांसं भुङ्क्ते चिरन्तराम् ।
सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा ॥
विजिगीषुर्नृपो नान्यैः कदाचिदभिभूयते ।
तदेवं हृदि सन्ध्यायन् नित्यमाद्यो नृपो भवेत् ॥
दैवपूरुषसंयोगे सर्वाः सिध्यन्ति सिद्धयः ॥

नैकेन चक्रेण रथः प्रयाति नचैकपक्षोऽङ्ग! चयाति पक्षी ।
एवं हि दैवेन च केवलेन पुंसोऽर्थसिद्धि र्नरकारतो वा ॥
केचिद्धि दैवस्य तु केवलस्य प्राधान्यमिच्छन्ति विधिप्रवीणाम् ।
पुंस्कारयुक्तस्य नरस्य केचिदप्यत्र दृष्टा पुरुषार्थसिद्धिः ।

अत्युद्यमी क्रियतएवच यः श्रमी च
शौर्य्यान्वितश्च गुणवांश्च सुधीश्च विद्वान् ।
प्राप्नोति नैव विधिना स पराङ्मुखेन
स्वीयोदरस्य परिपूरणमन्नमात्रम् ॥

शुभानि हर्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य ।
उर्वीपतित्वञ्च नृकारता च सर्वं हि सञ्जायमेति दैवात् ॥
केषां हि पुंसां महतो हि दैवात् स्थानस्थितानामपि चार्थसिद्धिः ।
एषां प्रभुत्व बहुजीविताच एको हि दैवो बलवानतोऽत्र ॥
पुंस्त्रीप्रयोगादथ शुक्रयोगात् तयोर्हि मध्ये विदधाति गर्भम् ।
स्त्रीणान्तु तत् विप्र ! नचापि पुंसां सर्वाणि चैषां मनुजेश्वरत्वम्
कामात्तु गर्भस्य न सम्भवोऽस्ति कामान्तु शुक्र नतु वीर्य्यहीनम् ।
अधत्त गर्भोऽपि जहाति गर्भं काचिच्च गर्भं न बिभर्ति दैवात् ॥
धाता विधाता निजकर्मयोगाद् विधेस्त्वभीष्टं त्वनुभावभाव्यम् ।
देवासुराणां नच दैत्यकानां स ह्येव कर्त्ता तु मनूद्भवानाम् ॥
दैवान्मघोनापि सहस्रमक्ष्णां दैवाद्धिमांशोः क्षयरोगता च ।
दैवात्पयोधौ लवणोदकत्वं दैवाद्भवेच्चित्रतरा च वृष्टिः ॥
यद्यप्यमुष्यं न परोऽस्ति दैवात् कुर्य्यात्तथापीह नरो नृकारम् ।
उद्दीपयेत्कर्मकरो नृकाराद्दुद्दीपितं श्रीरिववै तनोति ।
दैवेन केचिच्च हठेन केचित् केचिन् नृकारेण नरस्य चार्थाः ।
सिध्यन्ति यत्नेन विधीयमाना स्तेषां प्रधानं नरकारमाहुः ॥
स्वामिप्रधानं त्वयदुर्गकोशान् दण्डञ्च मित्राणिच नीतियज्ञाः ।
अङ्गानि राज्यस्य वदन्ति सप्त सप्ताङ्गपूर्वो नृपतिर्धराभुक् ॥
दुष्टंतसद्वृत्तनरेषु दण्डं राज्ञा विधेयं निपुणार्थसिद्ध्यै ।
दण्डञ्च मत्वाऽर्जितवित्तसत्त्वात् हीनार्थं पुंसाञ्च दमन्ति हीनम् ।
अन्यायतो ये जननं जनेश्वराः संपीड्य वित्तानि नयन्ति लोभात् ।
तत्क्रोधवह्नि परिदग्धकायाः क्षीणायुषस्ते तु भवन्ति भूपाः ।
दण्डो महान्मध्यकमन्यग्रस्तु मानन्तु तस्य त्रसरेणुकादि ॥
साशीति साहस्रपणमहान् स्यादर्धादिके चैव तदर्धको वा ।

सर्वार्थपादस्तु हरस्व दण्डः पात्यो नृपेणेति वदन्ति सद्यः॥
पाण्यादिपादच्छेदनमारणाञ्च निर्वासनं राष्ट्रत एव सद्यः।
ज्ञात्वापराधं मनुजस्य यस्तु देशञ्च कालञ्च वयोवपुश्च॥
दण्डेषु दण्डं विदधाति भूभृत्साम्यं स बध्नाति पुरन्दरस्य।
यः शास्त्रदृष्टेन यथा नरेश्वरो दण्डं विदध्याद्विधिवत्करांश्च॥
स चैवकीर्त्तिं वितनोति गुर्वीरायुश्च दीर्घं दिवि देवभोगान्।
यस्तूक्तमार्गाणि कुलानि राजा श्रेणिञ्च जातीश्वरताञ्च लोकान्
आनीय मार्गं विदधाति धर्मं नागेशगीर्वाणगणैः प्रशस्यम्।
अन्यस्य वह्निर्जलवित्तनाथशीतांशुरूपाणि ह बिभ्रतीह॥
सर्वं च भूयस्त्विह रूपकञ्च तत्तथ्यमानं शृणुत द्विजेन्द्राः!।
यदा जिगीषुर्धृतशस्त्रपाणिः स्थिरं समालम्ब्य स बिद्धसैन्यः॥
सर्वान् सपत्नांश्च स हन्तुकामस्तदासहर्यक्ष इवावभाति।
आकारणात्कारणतोऽपि एष प्रजा हतेयं स सद्धकीर्तिः॥
यदा तदैनं नृपतीति विज्ञास्तनूनपात्तं प्रवदन्ति भूपम्॥
धर्मास्तनस्तश्रुतिशास्त्रदृष्टाः शुभाशुभाचारविचारकृत्स्यात्॥
धर्म्येषु दानं त्वघकृत्सु दण्डं यदावनीशः सच धर्मराजः।
धनप्रदानेन करोति हृष्टा भूभृत्तदासान्द्रविणेशवश्यान्॥
समस्तशीतांशुगुणप्रयोक्ता यदायदासेष शुभाय शास्येत्।
प्रसन्नमूर्तिर्गतमत्सरः सन् तदोच्यते सोम इव क्षितीशः॥
आज्ञा नृपाणां परमं हि तेजो येषां न मन्ये त सशस्त्रवध्यः।
ब्रूयाच्च कुर्याच्च वदेच्च भूभृत्कार्यन्तदेवं भुवि सर्वलोकैः॥
दुर्धर्षतीव्रांशुसमानदीप्तो ब्रूयान्मनुष्यः पदषं नृपस्य।
यस्तस्य तेजोऽप्यवमन्यमान्यः सद्यः स पञ्चत्व मुपैति पापात्॥

योऽक्षाय सर्वं विदधाति पश्येत्
शृणोति जानाति चकास्ति शास्ति।
कस्यापि चाज्ञां न बिभर्ति राज्ञः
समस्तदेवांशभवोहि यस्मात्॥
यः स्वधर्मे स्थितो राजा प्रजां धर्मेण पालयन्।
सर्वकामसमृद्धात्मा विष्णुलोक मवाप्नुयात्॥
इति श्रीवृहत्पाराशरीये राजधर्मः सम्पूर्णः।

---

अथ विप्रो वनं गच्छेद्विना वा सह भार्यया।
जितेन्द्रियो वसन्नेव नित्यश्चौत्राग्निकर्मकृत्॥
वन्यैर्मुन्यशनैर्मेध्यैः श्यामनीवारकङ्गुभिः।
कन्दमूलफलैः शाकैः स्नेहैश्च फलसम्भवैः।
सायं प्रातश्च जुहुयात् त्रिकालं स्नानमाचरेत्॥
चर्मचीरवासा वै श्मश्रुलोमजटाधरः।
पितृंश्च तर्पयेन्नित्यं देवांश्चाजस्रमर्चयेत्।
अर्चयेदतिथीन् नित्यं भृत्यांश्चापि प्रपोषयेत्॥
न किञ्चित् प्रतिगृह्णीयात् स्वाध्यायेनैत्यमाचरेत्।
सर्वसत्त्वहितोपेतो दान्तश्चाध्यात्मचिन्तकः॥
सन्न्यस्तश्चान्तको नित्य दानशीलः सदा द्विजः।
किञ्चिद्देहं समास्थाय स वृत्त्या वर्तयेत्सदा॥
एकाह्निकान्तु कुर्वीत मासैकञ्चार्थसञ्चयम्।
षाण्मासिकञ्चाब्दिकञ्च यज्ञार्थं च वने वसेत्।
त्यक्ता तदाश्विने मासि अन्य स्थानं समाचरेत्॥
यथावदग्निहोत्रं तु समिधाग्नौ च पालयेत्।

कृच्छ्रचान्द्रपराकाद्यैः पञ्चमासोपवासकैः ॥
त्रिरात्रैर्वैकरात्रैश्च आश्रमस्थः त्यजेद्वपुः ।
तिष्ठन्नाव्रतिकस्तत्र स्वपेदश्वस्तथा निशि ॥
अतन्द्रितो भवेन्नित्यं वासरं प्रपदैर्नयेत् ।
योगाभ्यासरतो नित्यं स्थानासनविहारवान् ॥
वसन्तग्रीष्मवर्षासु जलाग्न्याकाशमाश्रयेत् ॥
दन्तोलूखलिको वापि कालपक्वभुगेव च ।
स्याद्वाश्मकुट्टको विप्रः फलस्नेहैश्च कर्मकृत् ॥
शत्रौ मित्रे समः स्याच्च तथैव सुखदुःखयोः ।
समदृष्टिश्च सर्वेषु न विशेद्वनगह्वरम् ॥
म्लेच्छव्याप्तानि सर्वाणि वनानि हि कलौ युगे ।
न भूयः शासितारस्तु ग्रामोपान्ते वसेदतः ॥
ग्रामाच्च नगराद्देशात्तथारण्यवनानि च ।
रक्ष्यं शररक्षितान्येव सर्वेषां फलदानि हि ॥
भूपतेः प्रथमं तत्स्यात् कृत्यं यस्येद्द्विजाग्रतः ।
यागं वाऽरण्यवासं वा कुर्यात्तु तदनुज्ञया ॥
सुत्रामानलवायूनां यमस्येन्द्रविवस्वतोः ।
यदा वित्तेशयोर्ब्रह्मा मात्राभ्यो निर्ममौ नृपम् ॥
पारत्रिकन्तु यत्किञ्चित् यत्किञ्चिदैहिकं तथा ।
नृपाज्ञया द्विजातीनां तत्सर्वं सिद्ध्यति ध्रुवम् ॥
नृपतेः प्रथमं न स्यात् स वै द्विज ! मखादिकम् ।
रक्षार्थं कथयित्वा तु यथाकार्यं समाचरेत् ॥
धेनुपूर्वं वशिष्ठस्य ह्यसौ दुर्वाससोऽपि च ।
वनवासाश्रमस्थस्य ह्यग्निकार्याय तांश्चयेत् ।

फलस्नेहाय दानस्य कालवैगुण्यतोद्विजः॥
तथा गोदुग्धसर्पिष्य मग्निकार्यं समापयेत्।
सर्वकालेषु सर्वेषु तथा चैवाश्रमेषु च॥
गोदुग्धादि पवित्रं स्यात् सर्वकार्येषु सत्तमाः!॥
सर्वकार्येषु सर्वेषु भिक्षां कुर्यादनाश्रमी।
तथा सर्वे प्रकुर्वन्ति पितृदेवार्चनादिकम्॥
अष्टौ भुञ्जीत वा ग्रासान् ग्रामादाहृत्य यत्नवान्।
आश्रमः संत्त्यं गच्छेदनिलां प्रागुदीचिकाम्॥

विप्रोविधाय वनवासविधेयधर्मान्
सर्वानिमानुक्तविधिक्रमेण।
संशुद्ध पापानि वपु र्विशोध्य
ब्रह्माधिगच्छेत् परमं द्विजेन्द्रः॥

आश्रमत्रयधर्मान्प्राक् चरित्वा ते द्विजातयः।
द्वयोश्च वा ततः पश्चाच्चतुर्थाश्रममाचरेत्॥
द्विजाग्रजो यदा पश्येद्वलिं पलित मात्मनः।
उपरतिं तथाक्षाणां क्षीणकामः स्वैर्द्विजः॥
समीक्ष्य पुत्रपौत्रं वा दृष्ट्वा वा दुहितुः सुतम्।
अधीत्य विधिवद्वेदान् कृत्वा यागविधानताम्॥
निश्चयं मनसा कृत्वा चतुर्थाश्रममावसेत्।
प्राजापत्यं विधायेष्टिं वनाद्वासमनोऽपिवा॥
समस्तदक्षिणायुक्तां सर्ववेदाख्ययाख्यवान्।
अग्निनात्मनि चारोप्य दण्डान्विधिवदाचरेत्॥
किञ्चिन्न्वेदं समास्थाय तद्धर्मेण च वर्त्तयेत्।
वाङ्मनःकायदण्डांश्च तथा सञ्चादयो गुणाः॥

मुमुक्षो नियतो यस्य स त्रिदण्डीति कथ्यते ।
कमण्डलुस्तमालाच भिक्षापात्र मथापरम् ॥
काषायवासःकौपीनकार्य्यर्थं वस्त्रमेव च ।
शिखायज्ञोपवीतञ्च दण्डानां त्रितयं तथा ॥
त्रिकालविधिवत् स्नानं भिक्षया चापि भोजनम् ।
शुद्धैकवृत्तिर्विप्रेषु सत्कर्म निरतेषुच ॥
भिक्षावर्णोयतिः प्रोक्तो वृत्तवर्जैन्तथैव च ।
असंभाष्यं स्वशून्येच तथाच शिल्पकारुभिः ॥
अवक्तव्यं तथा स्त्रीभिरेतत्कृत्यं यतेः स्मृतम् ।
सर्वदा दम्भसंरोधो नित्यमेकान्तशीलतः ॥
सदैव प्राणसंरोधः सदैवाध्यात्मचिन्तनम् ।
रुद्रे णुदार्वलाव्वश्ममयं पात्रं यतेः स्मृतम् ॥
शुचिरम्भस्त्वमीषाञ्च गोबालस्यावमर्षणम् ।
न दण्डेनैव दण्डेन विना वातेन वा तथा ॥
मोक्षावाप्ति भवेत्पुंसां किन्तु साध्यात्मचिन्तनम् ।
समत्वं सुखदुःखेषु तथा वै द्वेषरागयोः ॥
आत्म समानधर्म्मत्व मजस्रं चात्मचिन्तनम् ।
यतिभिस्त्रिभिरेकत्वं द्वाभ्यां पञ्चभिरेव च ॥
न स्थातव्यं कदाचित्स्यात् शिक्षन्तो नाशमाप्नुयुः ।
बहुत्वं यत्र भिक्षाणां वार्तास्तत्र विचित्रकाः ॥
स्नेहपैशुन्य मात्सर्यंभिक्षाणां नृपतेरपि ।
तस्मादेकान्तशीलेन भवितव्यं सदा द्विज ! ॥
आत्मास्यासरतो नित्यं ब्रह्मावाप्ति मभीप्सताम् ।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥

अध्यात्मयोगयुक्तस्य ब्रह्मावाप्तिर्भवेद्यतः।
यतेन्द्रियोऽपि दण्डार्हो युवा तस्य तथा निरुक्॥
युवा निरुक्तयाभिक्षुरात्मदुःखप्रहर्षकः।
भिक्षुर्गृहे वसेत्तत्र कामार्थान्योऽभिगच्छति॥
तत्स्थानेन वृथा चैव सह तेनैव तापयेत्।
निवसेदेकरात्रञ्च वहिर्यत्र तु वेश्मनि॥
स तारयति वृद्धान्वै विंशतिं पितृमातृतः।
भिक्षुर्यस्यान्नन्तु ब्रह्म योगाभ्यासरतो भवेत्॥
परिणामस्य योगेन कृतकृत्यो गृही स तु।
निर्ममो निरहङ्कारः सर्वैः सह प्रयच्छति।
ब्रह्मण्यात्मनि गोमायो मूत्रे इच्छास दामहक्।
चिह्नानि धात्रा कथितानि यस्यवक्रे सयस्याभिहितेव भिक्षा॥
योध्यानवान् वा सततं जिताक्षः स ब्रह्मकास्योगमनं करोति॥
वनस्थ भिक्षुधर्मान् वै यानब्रवीत्पराशरः।
तथावदभिधायेतान् वक्षाम्याश्रमभेदकान्॥
इति श्रीवृहत्पाराशरीये धर्मशास्त्रे वानप्रस्थयति-
धर्मोनाम दशमोऽध्यायः।

---

## एकादशोऽध्यायः।

अथातः संप्रवक्ष्यामि भेदमाश्रमसम्भवम्।
ब्रह्मचर्यादिकानान्तु तथा तथ्यं निबोधत॥
चतुर्णामाश्रमाणां तु भेदो दृष्टो मनीषिभिः।
प्रत्येकशो वदाम्येतत् शृणुध्वं द्विजसत्तमाः॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथा यती ।
एतद्भेदं प्रवक्ष्यामि शृणुध्वं पापनाशनम् ॥
चतुर्धा ब्रह्मचारी च स्वाद्दा यत्र यतस्तथा ।
अजायत्या हृहन्नेति लक्षणानि पृथक् पृथक् ॥
अक्ष।रलवणाशित्या गायत्याच स प्रत्यहम् ।
वर्त्तते च्लपया नित्यं गायत्र्यं तत्प्रकीर्तितम् ॥
चतुर्धा द्वादशाब्दानि योऽधीयानश्चतुः श्रुतीः ।
भिक्षया ब्रह्मचर्येण तेष्वध्यात्मं तदुच्यते ॥
ऋतुकालाभिगामी सन् परस्त्रीपर्ववर्जकः ।
वेदानध्येति भिक्षाभुक् प्राजापत्योऽयमुच्यते ॥
गुरोर्वा गुरुपुत्रस्य तत्पत्न्या वापि सन्निधौ ।
यो वसेदात्मसंज्ञानं ब्रह्मचारी स नैष्ठिकः ॥
गृहस्थस्य चतुर्भेदो मतः शालीनतीव्रकौ ।
यायावरास्तथा चान्ये घोरसंन्यासिकास्तथा ॥
कृषिगोरक्षवाणिज्यैः सर्वान् कुर्वन् क्रियां द्विजः ।
विहितोक्तात्मविद्यश्च वार्तावृत्तिः स उच्यते ॥
ददात्यध्येति यजते याजयेत् चैव पाठयेत् ।
कुर्यात्कर्म प्रतिग्राही शालीनोऽध्यानकृद्द्विजः ॥
उक्तः सन् कारयेदन्यां क्रियां कुर्यात्प्रतिग्रहे ।
पाठको नियतात्मा च यायावरः स उच्यते ॥
तिष्ठेद्व यश्च शीलोञ्छाभ्यां सुवृताङ्गिश्च वर्तते ।
आत्मविच्च क्रियां कुर्यात् घोरसन्यासिकः स तु ॥
वानप्रस्थश्चतुर्भेदो वैखानस उदुम्बरः ।
वालखिल्यो वनेवासी तल्लक्षणमथोच्यते ॥

फलैर्मूलैरकृष्टान्नैरग्निकल्पेन वै वसन् ।
कुर्यात्पञ्च महायज्ञानात्मविद्वैखानसः स तु ॥
दूमानि तत्फलः कृष्णधने धनुः उदस्वरे ।
योवा वसेद्‌ती ज्ञानी पञ्चयज्ञाग्निकर्मकृत् ॥
वनस्थो बालखिल्यो यो वसेत् वल्कलचीवरम् ।
अग्निकार्यकृदात्मज्ञः दुर्जातसेवितं त्यजेत् ॥
चतुरोऽन्यानमूनग्निकार्यं कुर्वन्वने वसेत् ।
फलस्नेहैः फलैर्वन्यै र्बहुभिः श्रुतिचोदितम् ॥
उद्धृत्य परिभूताद्भि तथा वै विन्तवृत्तिकः ।
फलैर्वन्यैर्वनान्तैश्च फेनपः पञ्चयज्ञकृत् ॥
पुत्रस्य भ्रातृपुत्रस्य भ्रातृदौहित्रयोरपि ।
न दुष्यात्रः कुटीस्थोवा यद्भैक्ष्यं वृत्तिभुक् द्विजः ॥
ज्ञेयो बहूदयो नाम यश्च पवित्रपादुकः ।
शिखासनोपवीतानि धातुकाषायवासकृत् ॥
चतुर्भेदपरिव्राट् स्यात् कुटीचरबहूदकौ ।
हंसाः परमहंसाश्च वच्यन्ते तु पृथक् पृथक् ॥
साधुवृत्ति र्द्विजो यस्तु भिक्षाभुगात्मचिन्तकः ।
बहूदकः स्वयं ज्ञेयः परिव्राट् स त्रिदण्डधृक् ॥
एके दण्डधरा हंसाः शिखोपवीतधारिणः ।
वार्याचारकराः शान्ता भूतानामभयप्रदाः ॥
वसेदेकक्षपां ग्रामे नगरे पञ्च सर्वशः ।
मर्षयन्तो व्रतैर्देहमात्मध्याने सदा रताः ॥
एकदण्डधरा मुण्डा कन्थाकौपिनवाससः ।
अत्यन्तलिङ्गिनोऽव्यक्ताः सर्वदैव च मौनिनः ॥

शिखादिरहिताः शान्ताः उन्मत्तरवधारिणः ।
नग्नः शूरामरैः केश वासिनो ब्रह्मचिन्तकः ॥
ये ते परमहंसा वै नैष्ठिका ब्रह्मभिक्षवः ।
उक्ता स्वव्रतभेदज्ञैरात्मनः प्रार्थनापराः ॥
यो ब्रह्मचर्ये व्रतचारिभेदो
भेदो गृहस्थस्य तथैव यत्नतः ।
हिरण्यवासो द्विजकर्मभेदो
ह्युक्तो मयासीद्द्विजभिक्षुभेदः ॥

इति वृहत्पाराशरीये वानप्रस्थयत्याश्रमभेदो नाम एकादशोऽध्यायः ॥

---

## द्वादशोऽध्यायः ।

मुमुक्षवो विरज्यन्तो देहाद्दुःखादितो यथा ।
शरीरज्ञास्तथा प्राज्ञः परब्रह्मलयं गताः ॥
स्वेदाद्यग्न्यम्बुधात्वीभि सारव्यामाशुनाशि तत् ।
तन्मुख्ये गुणसंयुक्ते तत्पञ्चत्वालनं व्रजेत् ॥
शुक्रशोणितसंयोगात् स्त्रीकोष्ठपाकसम्भवम् ।
दुःखेन दशभिर्मासैर्व्यापितम्भूरि दोहदैः ॥
जनन्यादौ गृहाभावे गर्भस्थस्यापि दुःखितः ।
ततश्च जायमानस्य योनियन्त्रनिपीड़नात् ॥
जातस्य बालरोगाद्यैः योगिनीग्रहदोषतः ।
देहिनः सर्वदा दुःखं पूजाजन्मादिकैर्ग्रहैः ॥
एवं बाल्ये महद्दुःखं कामार्थं यौवनेऽपि च ।

स्त्रिया विना तु स्यादूर्षाद्दरिद्रैश्वर्ययोरपि ॥
क्षुत्तृड्भ्यां प्रथमे वित्तं रक्षणाद्यै द्वितीयके ।
वृद्धत्वे वा तयोर्दुःखन्तस्माद् दुःखमयं वपुः ॥
मासेन लोपितं बालं स्नायुभिः कुल्यसञ्चयम् ।
मेदोमेहनसम्पूर्णं कफपित्तस्य साश्रयम् ॥
अमेध्यपूर्णभस्त्रावं दग्धे वै सर्वदा शुचिः ।
रमाया: स्नानगन्धाद्यैर्निर्गन्धी क्रियते बहिः ॥
दुर्गन्धः सर्वरन्ध्रेषु स्वघ्राणोद्वेगकारणम् ।
सततञ्च स्वावमेध्यङ्गं देहे शोच्यते शुभम् ॥
यद्दग्धं भवेन्मृत्स्ना दग्धभस्मत्वमाप्नुयात् ।
मृतस्य दृश्यते किञ्चित्तृणाकोपरतस्य च ।
क दृश्याभ्युद्यते विद्वान् कस्येह क्रियते पुनः ।
यन्त्रोपममिदन्धीमन् ! वायुत्यक्तं स्तम्भवेत् ॥
पृथगात्मा पृथक्स्वान्तं पृथक् खानि दशानि च ।
पृथक्भूतानि भूतानि पृथक्तेषां गुणोत्तरः ॥
पृथक् पापं दिवायुश्च तद्गतिश्च पृथक् पृथक् ।
पृथक् पृथगिति ह्येतत् पृथग्भिः किमिहोच्यते ॥
आरम्भकाणि यान्येव तेषु यान्ति तदंशकाः ।
अत्ययाद् यदवाप्नोति याति वीर्यं पुनर्वपुः ॥
शृणुयात् पादपस्पर्शे जिघ्रेत् स्वादेन्द्रियां स्मरेत् ।
स्वपेच्च जागृयाद्गच्छेद्भयग्लायेद्यतेत वा ॥
गृह्णीयाद्यद्यथाप्यद्य जायेत स नयेदपि ।
सोऽखिलकस्त्वेतृपरो देहाद्योदेहीति निगद्यते ॥
नैकस्य स्यान्नदेहे वै प्रत्यभिज्ञा कथम्भवेत् ।

एकाहक् दंष्ट्ररूपस्य पुनरन्येन पश्यतः ।
अद्राक्षं यदहो वस्तु तदेवैतत्स्पृशाम्यथ ॥
यच्चास्पृक्षं च पश्यामि प्रतीतिर्यस्य जायते ।
दर्शनाभ्यां तु सततं ग्रहेशादेकवस्तुनः ॥
अस्ति ह्यात्मा परो देहात् यो देहीति च कथ्यते ।
गृहीच गृहमध्यस्थो लग्नादिच समाचरेत् ॥
देहे चतादिसंरोहात् वशो देह्यस्ति कश्चन ।
स एव पूज्यते कुर्वन् उद्दिष्टो तस्य तावति ।
वार्यते कर्मणा चायं बाध्यते कर्मणापि च ॥
उभयस्यापि चैवात्र प्रत्यक्षं दृश्यते द्विजाः ! ।
मायावित्तञ्च सूक्त्वमतिक्रान्तागतात्मुमान् ॥
अन्नं बाधान्यहर्तॄणां पिशुने पूतिनासिना ।
भरतो वर्णकैश्चित्रैर्देहस्य वर्णयेत्तथा ॥
कुर्वन्नानाविधं कर्म तथात्मा कर्मजस्तनूः ।
जरायुजाण्डजादीनि वपूंसि यो ग्रहैर्निजैः ॥
कर्मभिर्वर्णभेदैश्च चित्रदैर्गत्यरूप्यतः ।
बधिरान्धकिनः क्लीवा जायन्ते पुरुषाधमाः ॥
निरतः स पुनर्भूत्वा विद्वद्विप्रकुलेषु च ।
महाकूर्चांश्च जायन्ते लक्षणाङ्कितयान्विताः ॥
धनवन्तः प्रजायन्ते वेदवन्तो यशस्विनः ।
रूपसम्भाग्यसम्पृक्ताः सर्वेषां नयनप्रियाः ॥
ब्रह्माद्यामरतां शान्ताः षट्कर्मनिरतास्तथा ।
पञ्चयज्ञकृतो नित्यं अग्निष्टोमादिषु स्थिताः ॥
द्विजोपास्तिकरा नित्यङ्कुर्वाचार्यादि पूजकाः ।

चतुराश्रमवर्णानां कथिताः समदर्शिनः ॥
गुणैः सर्वैः समायुक्तास्तेजस्विनो द्विजप्रियाः।
एवम्भूताश्च ये विप्रास्तेषां विष्णुः सदान्तिके ॥
विष्णुश्च सर्वदैवत्यं तस्माद्विष्णुमयो भवेत्।
दैवत्यार्चाकृतां नित्यं गुरूपास्तिष्टतान्तथा ॥
ब्रह्मैवाचाम्रतां सम्यक् ब्रह्मसान्निध्यमृच्छति।
तदुपास्यं सदा ब्रह्म यावत्साधनकञ्च यत् ॥
बहुपापान्विदित्वा यः संसरेन्नेह मानवे।
वदन्ति ब्रह्मदेवेशे ब्रह्मन्यासमनेकशः ॥
ब्रह्मापि द्विविधं धाम न परं परमेव च।
समानं सपरं ब्रह्म शब्दब्रह्मेति कीर्तितम् ॥
प्रणवाख्यन्निरूपन्तत् प्रागेव हि विशेषतः।
प्राणायामैस्तदभ्यस्य पूरकाद्यैश्च वायुभिः ॥
पूरको कुम्भको वायू रेचकस्तु द्वितीयकः।
येन व्यावर्तते वायुर्नासाग्रान्निःसरन्बहिः ॥
श्वासयोगेन तं प्राज्ञः पूरकं तद्विदोऽनिलम्।
श्वासयोगं वदन्त्येनं कवय स्तन्तु पावनम् ॥
विदुस्तं रेचकं तज्ज्ञाः रेच्यश्च शनकैः शनैः ॥
न वेगाद्रेचयेद्वायुः सर्वथा विघ्नभाक् भवेत्।
मोचयेन्मन्दमन्दन्तु वह्निः स्यात् कुम्भितो यथा ॥
नासाग्रस्थितपाणिस्तु सम्यिखञ्चालनं चमम्।
अनिलं रेचयेद्योगी न मन्दं वाति वेगवान् ॥
न चायतेऽनिलो यस्य निःसरन्नासिकाग्रतः ॥
यस्मात्तं कुम्भितो जन्म प्राणयोगी स उच्यते।

दीर्घाद्दुःखं परं ज्ञानं समस्ता योगसिद्धयः ॥
देहे तस्यावतिष्ठन्ति प्राणायामवशीकृताः।
यत्र तिष्ठति जीवोऽस्य निःस्थोऽस्वत उच्यते।
स किन्न धार्य्यते प्राणो ब्रह्मा तिष्ठति यत्र तु ॥
प्राण एव हि चात्मा च प्राणो देहस्य वाहकः।
शरीरान्निःसृते प्राणे नात्मा विग्रहवाहकः ॥
देहन्त्यक्त्वा यदा जीवो बहिराकाशमास्थितः।
तदा निर्विषयो वायुर्भवेदत्र न संशयः ॥
तदा ससर्ज देहेषु नासाग्रमास्थितः शिवः।
प्रत्यक्षः सर्वभूतानां तिष्ठति नच लक्ष्यते ॥
तदा न श्वसते वायुस्तदा निष्कल मुच्यते।
नाभिसंस्थन्तु विज्ञाय जन्मबाधाद्विमुच्यते ॥
देहस्थः सर्वसत्वानां स जीवति शृणोति च।
धर्माधर्म्मौ अवष्टभ्यौ देहे देहे व्यवस्थितौ ॥
सुषुम्नकज्ञसंस्थस्तु अथ ऊर्द्ध्वं प्रधावति।
धर्माधर्मैर्महापाशै र्गृहीतः स प्रवर्त्तते ॥
अर्द्धमुच्छ्वसते यावत् प्राणो द्रव्यसमीरणात्।
तावत्प्राणस्तु विज्ञेयो यावन्नासाग्रमास्थितः ॥
अलक्ष्यं निष्कलं ब्रह्म यावन्न श्वसते द्विजः।
श्वसनेन समायोगादाकाशात्पुनरागतः ॥
नासारन्ध्रसमालीन स्तदा निष्कल उच्यते।
स जीव इति विख्यातः स विष्णुः स महेश्वरः ॥
ध्यातव्या देवतास्तत्र क्रमेण पूरकादिषु।
विष्णुब्रह्मेश्वरास्तेषु स्थानेषु स्थावरा द्विजैः।

नीलपङ्कजविख्यातं आनीय नाभिमध्यतः ॥
महात्मानं चतुर्बाहुकेयूरन्तं हरिं स्मरेत्।
हृत्पद्मे कुम्भके ध्यायेद् ब्रह्माणं पङ्कजासनम् ॥
रक्तेन्दीवरवर्णाभं चतुर्वक्त्रं पितामहम्।
रेचके शङ्करं ध्यायेत् ललाटस्थं त्रिशूलिनम् ॥
शुद्धस्फटिकसङ्काशं संसारार्णवतारकम्।
एवं श्वसनसंरोधो देवतात्रयचिन्तनात्।
अग्निर्वाय्वम्बुसंयोगादन्तरं शुध्यति त्रिभिः ॥
निरोधादभवद्वायुस्तस्मादग्निस्ततो जलम्।
इति त्रिदेवतायोगात् शुद्ध्यन्त्येनं पुनर्द्विजाः ॥
भवन्ति प्रणवोपेताः प्राणायामस्तु षोड़श।
अपि भ्रूणहनं मासात् पुनात्यहरहः कृतः ॥
प्रातरहस्तथायञ्च पूरकं ब्रह्मणोऽन्तिकम्।
रेचकेन तृतीयेन प्राप्नुयात् परमं पदम्।
न प्राणेनाप्यपानेन वायुवेगेन रेचयेत् ॥
प्रागुक्तेन प्रयोगेण मोचयेत्प्राणसंयमी।
शरीरञ्च शिरोग्रीवं विद्वत्पाणि च पादद्वयम् ॥
सर्वाङ्गं निश्चलं धार्य्यमापूर्य्य सर्वनाड़िकाः।
संहृत्याङ्गानि सर्वाणि कर्मविज्ञानकृद्द्विजः ॥
बद्धासनो चलाङ्गस्तु कुर्यादसुनिरोधनम्।
कृत्वासुसञ्चयं विद्वान् विधिवत्तु समुपस्पृशेत् ॥
अन्तरे शुध्यते यस्मात् कुर्यादाचमनं स्मृतम्।
इत्युक्तः प्राणसंरोधो देवतात्रयसंयुतः ॥
त्रिमात्रप्रणवस्तत्र ध्यातव्यः सर्वयोगिभिः।

धार्यमाणस्य वातस्य विश्रान्तिः स्यादसात्वकैः ॥
तत्परं निष्कलं ज्ञानं तद्विदु ब्रह्मचिन्तकाः।
मृदुमध्योत्तमत्वाच्च स्थूलसूक्ष्मानुभावतः ॥
त्रिविधं प्राणसंरोधं विदुस्तत्त्ववेदिनः ।
क्रियमाणो विशेषेण प्रत्याहारोऽय मुच्यते ॥
सर्वं प्रागुक्तमेव स्याद्विशेषं तु निबोधत ।
वाह्यं वायुं यथोत्साहं आकृष्य यच्छनैः शनैः ॥
निरुध्य विधिवद्योगी प्रत्याहारः स उच्यते ।
व्यावृत्यातिमुखी यत्र खानि यत्र निरुध्य च ॥
चिन्तयेन्निश्चलीकृत्य प्रत्याहारः स उच्यते ।
प्राणाद्यवयवस्थूलाः संकल्पाद्यास्तुवायवः ॥
निरोद्धव्या दशोऽप्येते प्राणसंयमकारिभिः।
वायुरेकोऽपि देहस्थः क्रियाभेदेन भिद्यते ॥
प्रकर्षेण समन्ताच्च न यानादिक्रिया स्मृताः ।
भविष्यातीतकालेभ्यः कर्मभ्यश्चास्तु संयमी॥
सर्वानिलांस्तथा खानि निरुध्यैकत्र धारयेत् ।
स धीमान्वेदविद्विद्वान् स योगी ब्रह्मवित्तमः॥

स्थानं द्विजन्मा विधिवत् अ.स्य माशस्य यद्यातिविधिः परस्य पाराशरोक्तैर्बहुभिः प्रकारैरुक्तोविधिः प्राणनिरोधनस्य ॥

प्रत्याहारो विशेषस्तु प्रोक्तस्तस्यैव वित्तमाः ! ।
यदभ्यस्याप्नुयाद्ब्रह्म सर्वदा नैदमव्ययम् ॥
इति श्रीवृहत्पाराशरे प्राणायामप्रत्याहारविधिः ।

---

यातैस्तु पुनरावृत्तिः कदाचिदिह दृश्यते ।
संसृतिं नाशयत्येन शक्रस्तु तस्तदाब्रवीत् ॥
उक्तोऽसि संयमं पूर्वं विधिहीनो हि नाशनः ।
निबोधध्वं चतुर्थन्तु ध्यानं प्रणववैभवाः ॥
विधिवत्प्रणवध्यान मेकचित्तस्तु योऽभ्यसेत् ।
ब्रह्माभ्येति स मुक्तात्मा स योगी योगिनां वरः ॥
तद्ध्यानमसुसरोधं तुर्यसव्यगिरोच्यते ।
तदभ्यास्येन पित्तन्तु चिन्तापित्तविवर्जितम् ॥
तच्छान्तं निर्मलं शुद्धं ध्यातव्यं हृत्सरोरुहे ।
तद्वै यन्तद्वरेण्यन्तु मुक्तिबीजं तदुच्यते ॥
सञ्चित्य व्याहृतीः सप्त प्रणवाद्या स्तदन्तकाः ।
सव्यगुक्त मिदं ध्यात्वा परब्रह्मणि योजयेत् ॥
हुतभुक् पवनो जीवस्त्रयोऽप्येतेहृदिस्थिताः ।
ये तत्सर्वन्तु वैकत्व संसारे ध्यानकृद्द्विजः ॥
ॐङ्कारावर्त्तनालेन उद्धृत्य परियोजयेत् ।
योजयेत्सर्वमेवैतस्मिन्द्वयोगी स उच्यते ॥
शून्यभूतं तु यत्प्राणो ह्यासजीवितसंज्ञितम् ।
यस्मादुत्पद्यते श्वासः पुनस्तत्र निवेशयेत् ॥
आद्यन्तप्रणवं विद्वान् घटाकाशवदुत्सृजेत् ।
स पश्यन् निर्गलं योगीपुरुषं सम संशयम् ॥
अन्तर्वक्रः बहिः सव्यकुण्डलीभूतसर्पवत् ।
ध्यातव्यः प्रणवस्तस्य मध्यमं धाम संस्मरेत् ॥
स ध्यातात्मा स बिन्दुश्च तदेवं परमं पदम् ।
तदभ्यस्तं हि तजज्ञात्वा स तस्मिन्नेव लीयते ॥

प्रथमं प्रणवो वक्त स्त्र्यक्षरः परमाक्षरः ।
हृजत्वमन्यदाप्नोति संप्राप्य परमं पदम् ॥
पञ्चमं तु पदं विद्वन् ! तन्मूर्धन्यवतिष्ठते ।
नादविन्दुः समाख्यातोहिजेन्द्राः । परमंपदम् ॥
यत्प्राप्य न निवर्त्तन्ते भारत्यस्यात्यमेव च ।
सर्वेभ्यो मातृकावर्णाः पुनस्तत्र विशन्ति च ।
वर्णात्मासन्नवर्णास्तु समस्तं वर्णजीवनम् ॥
न दीर्घं न च ह्रस्वञ्च न घोषं नाप्यघोषवत् ।
न विसर्गस्य वा विद्वान् नानुस्वारविपर्ययः ॥
हृद्याकाशनिविष्टं यद्चलत्व प्रयाति चेत् ।
ज्ञानयोगे त्रिषष्टिर्वै यो विभर्त्यक्षराणि तु ॥
तत्परं योगिभिर्ध्येयं व्योम यस्य तु मध्यमम् ।
व्योमान्तगं यत्तुध्येयमनन्ताकाशमव्ययम् ॥
चिन्तयामो वयं तत्त्वं धियो यो नः प्रचोदयात् ।
ये तद्ब्रह्मत्रयीरूप मेतद्ब्रह्म त्रयीमयाः ॥
येषां स परमा मुक्ति र्गत्वा यां न निवर्त्तते ।
आदाय चापं प्रणवं च वाणं सन्ध्याय चात्मानमवेपलक्ष्यम् ॥
सम्यग्विधिं तं प्रविविश्य तस्मिन् प्राप्नोति योगी स तु मुक्तिधाम
उद्दिश्यभक्तिं विधिनादि विद्वन् ! ध्यानं विधेयं ध्वनिपूर्व्वकञ्च ॥
सर्वं विधानं विधिरञ्च सम्यक् यस्तु समर्थोविधिरेव चास्य ॥

इति श्रीबृहत्पाराशरीये योगाध्यायप्रणव-
ध्यानविधिः सम्पूर्णः ।

अथान्यत्संप्रवक्ष्यामि विधानं ध्यानकर्मणाम्।
नानामतोदितं कार्यं परब्रह्माप्तिकारकम्॥
कामात्मकर्मिह प्रोक्तं परमात्मा किमुच्यते।
वक्ष्यमाणमिदं विप्राः! शृणुध्वं भक्तितत्पराः!॥
स्वीये र कर्मणा येषां शरीरग्रहणं भवेत्।
कर्मात्मन स्तदुच्यन्ते निर्गताः परमात्मनः॥
ये न स्पृशन्ति सत्त्वांशं स्तथा सत्त्वदयोगुणाः।
कदाचित्केन् कर्माणि परमात्मा ततः परम्।
निष्ठानाशौचविद्येति गुणत्रयं स्पृशन्ति हि॥
सो यस्मिन् कथमेतस्मिन् लोकपालो विधीयते।
स्वात्मानमेव चात्मानं वेष्टत्कोष्टककारवत्॥
कर्मणैष प्रजातस्तु बाह्यस्वार्थविमोहितः।
तस्माद्विवर्जयेत्कर्म स्वर्गादेरपि साधकम्॥
संसारेस्वर्गतिः कर्मचयः सतु पुनर्यतः।
सीमैषा परमाविप्रा ब्रह्मणः पातमोच्चयोः॥
कर्मस्थानमिदं धात्री कृतमत्रोपभुज्यते।
वैदिकः कर्मयोगस्य दिवोऽप्यावत कस्य तु॥
योतेह्यात्यन्तिकस्वस्य ज्ञानयोगमतोऽभ्यसेत्।
हृद्विनिःसृतनाडीनां सहस्राणां द्विसप्ततिः॥
तन्मध्यावस्थितं तेजः शशिप्रभया भाति यत्।
यन्मध्यमण्डलेष्वात्मा विभूमाननदीववत्।
संज्ञातव्योविदित्वा तं संसरेन्न पुनर्यतः॥
भूरिभुवमधोवक्त्रं तत्वज्ञातव्यं व्यवस्थितम्।
नालुच्छेदेन वातेन कृत्वोद्घास्य विकासयेत्॥
विकास्य तस्य मध्यस्य मचलं दीपशिखेव तत्।

तदूर्द्धं निःसरेत्सुभ्रं सूक्ष्मं तत्तु विचिन्तयेत् ॥
ललनद्वारनिर्गच्छन् कुन्तयोगीच चिन्तयेत् ।
तावत्तु चिन्तयेद्यावन्निरालम्बञ्च इच्छति ॥
निरालम्बं यदा ध्यानं कुर्वाणो निश्चलो भवेत् ॥
तदा तदुच्यते ब्रह्म स योगी ब्रह्मवित्तमः ।
तत्पदञ्च पदातीनां तत्प्राप्तौ मुक्त उच्यते ॥
इति ध्यानं विधातव्यं मुक्तिकाङ्क्षि द्विजैर्द्विजाः ! ।
भूतानामात्मभूतस्य तानि सम्यक् प्रपश्यतः ॥
विमुच्यत्यमरो मार्गं पदं किं न पदस्य तु ।
यो न तिष्ठति यो याति न कश्चित्सर्वथैव यः ॥
अवाच्यो वाङ्मयोऽन्यस्तु सर्वश्रुति प्रचोदितः ।
योऽन्तिकेऽपि दवीयांश्च योऽस्तिनास्तिस्वरूपकः ॥
यस्येदं नममेति स तत्रैव च प्रलीयते ।
यस्तु सर्वाणि भूतानि पश्यत्यात्मगतानि तु ॥
आत्मानं तेषु सर्वेषु ततो यो न विमुच्यते ।
सर्वभूतानि भूतात्मा यत्र तिष्ठति धीमते ! ॥
शौचमोहौ च कौ तस्य ह्येकञ्च ह्यनुपश्यतः ।
समाप्तावुत्तमादीनां यन्मन्त्रं ब्रह्म यो द्विजः ॥
ॐ खं ब्रह्मेति चाम्नायो दर्शकश्चैष वेधसः ।
आत्मज्ञानबहूपाया उक्ता स्त्वन्ये च कोविदैः ॥
ते स्तैः सर्वैः स मन्तव्यो र ज्ञातव्योपदेशतः ।
ज्ञातव्यः परमात्मैवं भक्तिं कृत्वा परेण तु ।
ध्यानज्ञानस्य तद्भक्तेः यत्र विश्रमते मनः ॥
तदेवोपदिशेत्तस्य वस्तुज्ञानोपदेशकम् ।

मनो यस्य विषयास्तु यत्र ज्ञाते च वस्तुनि ॥
ध्यायेत्स तु तदेवेति यावत्स्यात् ध्यानसन्ततिः।
ध्याने तत्र तु संलग्ने हरावात्मनि वा पुनः ॥
ध्यानं नियोजयेद्योगी तं निरालम्बतां नयेत्।
योगशास्त्रेषु यत्प्रोक्तं रहस्यारण्यकेषु च ॥
तत्तथोपदिशेद्ध्यानं ध्यायेदपि तथैव च।
प्रवदन्त्यन्यथा केचिच्छुभादिभेदवांस्ततः ॥
त्रैविध्यं विदुषो विद्वन्विद्धि तत्त्वपरे पदम्।
चित्तजं स्मृतिजं भावं भावनाभावमेव च ॥
त्रिविद्यमात्मविद्येत योगाभ्यासफलाफलम्।
आत्मशक्तिशिवस्येति चैतन्यमतिसंस्थितम् ॥
उत्तरोत्तरवैशिष्ट्यात् योगाभ्यासः प्रवर्त्तते।
स एको निष्कलीभूतः कर्मात्मा यत्र योजितः ॥
न बिभेति सचैकाकी भयं वै जायतेऽन्यतः।
न देवगतिर्भिन्नाभ्यां ध्यानं यस्यास्ति योगिनः ॥
सम्बित्सोऽत्र ह्यजं शान्तं कदाचित् कुवरेण तत्।
त्र्यम्बकस्य चतुर्वक्त्र श्चतुर्बाहुः परेश्वरः ॥
एकएव महेशो वै ततस्त्रिधेति कीर्तिता।
नाभिमध्यस्थितं विद्वन्विज्ञानेन सुनिर्मलम् ॥
रविवद्भजमानन्तु काशदृष्टिगणैर्द्विजाः !।
चिन्तयेद्धृदि मध्यस्थं दीप्तिमत् सूर्य्यमण्डलम् ॥
तस्य मध्यगतो सोमवह्निचन्द्रशिखा महान्।
तन्मध्यन्तु परं सूक्ष्मन्तद्ध्यायेद्योगमात्मनः ॥
तन्मध्ये चिन्तयेद्देवं वक्ष्यमाणक्रमेण तु।

विम्बमध्यगतो नादो नादमध्यगतो ध्वनिः ॥
ध्वनिमध्यतः सारः सारमध्यगतोऽप्युमान् ।
तस्य मध्यगतं ब्रह्म शान्तं तस्य तु मध्यगम् ॥
परं पदन्तु यच्छान्तं सम्यगुद्धृत्य यो व्रजेत् ।
जीवात्मा कायमध्यस्थ स्तत्रापि देहवर्जितः ॥
वक्त्रनासापुटस्थस्तु भुञ्जीत हृदयान् प्रभुः ।
इत्येतद्ध्यानमार्गन्तु वदन्ति कवयो द्विजाः ! ॥
कश्चिदन्यान्यया ब्रूयुरूपं ब्रह्मविदो विदुः ।
न ममापि हि दुःखस्य शर्म यत्र निरन्तरम् ॥
ब्रह्मणोरूपमानन्दन्तन्मुक्तरूप मुच्यते ।
सर्वव्यापी य एकस्तु यस्यानन्तस्य भावकः ॥
स मन्तव्योऽजरोह्यात्मा सर्वं व्याप्य च यः स्थितः ।
एकं व्योम यथानेकं प्रविभे रुपलभ्यते ॥
एकोऽप्यात्मा तथानेकोजलाधारेषु सूर्य्यवत् ।
विश्वरूपोमणिर्यद्वद्दर्णान् गच्छात्यनेकशः ॥
उपाधिस्थ स्तथा त्वेको न नादेहेषु कर्मतः ।
कलाकाष्ठादिभेदेन वर्त्तमानादिभेदतः ॥
एकः कालो यथा नाना तथात्मैकोऽप्यनेकधा ।
देहमध्यस्थितं देवं यो न ध्यायति मूढधीः ॥
सोऽर्कलब्धं मधु त्यक्त्वा क्षेशायाच्नो गिरौ व्रजेत् ।
यत्तीर्थयानं जपयागहोमान् कुर्य्याद्दिपुष्पान् सतु वैष्णवः स्यात्
सदैव पिण्डं परिहृत्य दूरादर्त्तंप्रभावैस्स वरिष्ठष्ठे ॥
संभ्राम्य वै विधिवदात्मकरणोग्रचक्रे
पापेन कुम्भदवधान्नवरेण नूनम् ।

आरोप्य सोऽर्थ्यन्नत दण्डमुखेन दुर्गं
हृत्पद्मसंस्थशिवतत्वमतिप्रहीणम्।

द्वौ मार्गावात्मनौ ज्ञेयौ ब्राह्मणैर्ब्रह्मचिन्तकैः।
अभियाति विदित्वाथ सायुज्यं परवेधसः॥
विद्वन्धूमादिरेको वै द्वितीयस्तु विराडिकः।
यत्र देवौ प्रतीनथ्यौ यत्प्रतीतिरजायत॥
धूमः क्षिप्रं सितः पक्षो दक्षिणायनमेव च।
लोकापत्यञ्च चान्द्रश्च मातरिश्वानुकर्षणाः॥
पाथोधात्री कषादेरे सम्भवन्ति समाश्रिताः।
अर्चिरहः सितः पक्ष स्तथाचैवोत्तरायणम्॥
देवलोक स्तथा सूर्य्यः विद्युतश्च क्रमादिमान्।
मनसा पुरुषा यान्ति तानतो ब्रह्मलोकताम्॥
यत्र जातो पुनर्देहं संसरन्ति पुनर्द्विजाः!।
मार्गं द्वय पुनर्धीमन्मन्तव्यं सद्विजैर्द्विजः॥
यन्न ज्ञातेन विज्ञातुं नाकमोक्षौ च सिध्यतः।
स आरण्यस्थभिक्षूणां त्रयाणामपि स द्विजाः!॥
समानज्ञानमेतद्वदिति ब्रह्मविदोविदुः।
यथा दहति वैधांसि समिद्धश्चाशुशुक्षणिः॥
ज्ञानमभ्यस्यमानन्तु तथा दहति संसृतीः।
तस्मान्मार्गद्वयेनापि ह्यात्माज्ञेयो भवेद्विजैः॥
येन जानन्ति तेषान्तु इदं यूकादियोनिषु।
पन्नगत्वं कृमित्वं वा कीटत्व मथवाप्नुयुः॥
एतेभ्यस्त्वधमेभ्यश्च जायन्ते तासु योनिषु।
विद्याविद्भिः स मन्तव्यः स हेतुः स्वर्गमोक्षयोः॥

विद्यामोक्षप्रदा सा च अविद्यामन्युनाशकृत् ।
ज्ञानयोग स्तथा कर्म्म विद्याविद्भिः स्मृतो बुधैः ॥
अपवर्गाय वै नृणां कर्म्म त्रिविष्टपाय च ।
कर्म्मापि क्रियमाणं निरपेक्षं मोक्षकृद्भवेत् ॥
विष्णवे गुरवे वापि कर्म्म कृत्वा निवेदयेत् ।
आत्मनः फलमिच्छद्भि र्यत्कर्म्म क्रियते नृभिः ॥
तेनैव वाञ्छितावाप्ति स्तेनान्यद्वोपजायते ।
हरिं वानित्यमभ्यस्य सर्व्वभावेन सद्द्विजैः ॥
तदभ्यासवदाप्नोति मृत्युदाहात् हरिस्मृतेः ।
एक एव हि स ध्येयो यत्पर नास्ति किञ्चन ॥
विनाशमान् महानेष स ध्येयः संयतेन्द्रियैः ।
महान्त पुरुष देवं हरिदरूप मतःपरम् ॥
ब्रह्मवित्मत्यमृत्युर्वै प्रयाति ह्यनिवर्त्तकम् ।
एष एव नृणां पन्था ब्रह्म वै य मुपासते ॥
दास्य जन्मस्वनेकेषु विचिन्तत्त्वैकचेतसाम् ।
नाभिभक्तापि वै केन नान्यभ्यासकृतेरपि ॥
ब्रह्माप्तिजन्मनां पुंसां किन्तु सा भूरिजन्मभिः ।
यतयः सर्व्वदाभ्यास.ब्रह्म यन्न प्रपेदिरे ॥
तन्मनुष्यैः कथं प्राप्य मेकेनैव तु जन्मना ।
ज्ञानाभ्यासेन तद्ब्रह्म तैश्च दम्भस्वरूपकैः ॥
न प्राप्यते परं ब्रह्म न.वाप्यासनमुद्रया ।
बहुभिः किमुपायैस्तु प्रोक्तैर्वा ग्रन्थविस्तरैः ॥
एकमेवाभ्यसेत्तन्तु ये न चित्ते भवेद्धरिः ।
एकैव शुद्धिस्तु सदा यथा स्यात् क्रियतां तथा ॥

नैव कुर्य्यान्मनस्यन्यं विरुद्धमिति सर्वथा।
भावः स्वर्गाय मोक्षाय नरकायापि स स्मृतः॥
तस्मात्तं शोधयेद्यत्नाच्छुचिः स्याद्भावशुद्धितः।
एकस्य पुत्रकर्त्तारौ उक्तस्यापिच योषितः॥
भिन्नभावौ भवेतान्तावतीव वै विशोधयेत्।
परिष्कृतो नरो नार्य्याः संह्लादयति यौवनम्॥
तल्पस्थोऽपि सकामान्तां भावहीनो न कामयेत्।
एकीभावो ह्यसैकार्य्यौ यथा स तु न वै चलेत्॥
तद्बुद्धा पञ्चतामिच्छन् स्वर्गमोक्ष मवाप्नुयात्।
कृत्वापि विविधान्यागांस्तपस्तप्त्वा सुदुष्करम्॥
मृत्युकाले मतिर्यस्याद्गतिं तामेव विन्दति।
योगप्रयोगः कथितः द्विजेन्द्रा! ध्यानस्य मार्गो बहुधापि वापि।
योऽभ्यस्यमानस्तु भवद्विधानां ब्रह्माप्तिकृद्यस्तु तथा द्विजानाम्।
प्रत्याहारस्य योगस्य ध्यानविस्तरतस्तथा।
उक्तं द्विजहितार्थं वै ब्रह्मावाप्तिकरं द्विजाः!॥
अङ्गुल्यङ्गुष्ठयोर्नादक्षणं स्यात्तद्द्वयं त्रुटिः।
द्वाभ्याञ्चैव लवस्ताभ्यां निमेषोऽपि लवद्वयम्॥
तैः पञ्चदशभिः काष्ठास्ताश्च त्रिंशत्कलाः स्मृताः।
द्वाविंशति त्रिभागस्तु त्रुटिकेति प्रकीर्तिता॥
तद्द्वयञ्च मुहूर्त्तः स्यात्ते त्रिंशत्तुत्रयादिनम्।
तत्पञ्चदशकं पक्षस्तद्द्वयं मास उच्यते॥
तद्द्वयं ऋतुरित्युक्तं तद्द्वयं काल उच्यते।
तत्षाड्ढमयनं प्रोक्तं तद्द्वयं वत्सरस्तथा।
पञ्चभिस्तैर्युगः प्रोक्तो तद्द्वादशकषष्ठकम्॥

षष्ठकः षष्टिगुणितो वाक्पते युगमुच्यते ।
षष्टिघ्नः सोऽपि कालज्ञैः प्रजानाञ्च युगः स्मृतः ॥
तद्द्वयन्तु कलिः प्रोक्तो तद्द्वयं द्वापरं भवेत् ।
कलित्रयाणां त्रेता स्यात् कृतं कलिचतुष्टयम् ॥
कलिभिर्दशभिर्विद्वान् चतुर्युग मिति स्मृतम् ।
चतुर्युगसहस्रेण त्वजाहः कल्प उच्यते ॥
अष्टयुगा पितृसन्ध्या सायंसन्ध्या पितावती ।
तदेकसप्ततिगुणं मन्वन्तर मिति स्मृतम् ॥
मन्वन्तरद्वयेनेह शक्रत्त्वयः प्रकीर्तितः ।
एवं मानेन वर्षाणां शतं ब्रह्मत्त्वयः स्मृतः ॥
ब्रह्मत्त्वयशतेनापि विष्णोरेक महर्भवेत् ।
एतद्विधाः समासेन प्रयान्तेऽब्दशते द्विजाः ! ॥
रुद्रस्यात्मनि लीयन्ते भूतभौतिकसृष्टयः ।
लब्धं यथानेन परंपदं तत्तद्ध्यानयोगात् सतु तत्र लीयते ।
परम्पराणां परमन्त्वचिन्त्यं परात्परं दिष्टपदादतीतम् ॥
क्षणादिकालं क्रमशोऽप्यमत्तः प्रयाति चैतत्पदमव्ययं तत् ।
कालज्ञानेन योगेन योगिभि र्ध्यानकारिभिः ॥
मुमुक्षुभिः सदा ज्ञेयं निरालम्बं परं पदम् ।
पराशरोक्तशास्त्रन्तु चातुर्वर्णा जनाश्चरेत् ॥
हितमुक्तं प्रयत्नेन सदा ध्येयं विजायते ।
श्रावयिष्यति यः श्राद्धे ब्रह्मणान् भक्तितत्पराः ॥
प्राप्स्यन्ति पितरस्तस्य तृप्तिं वै शाश्वतीं द्विज ! ।
द्वादशं दश वा सप्त षडष्टौवाथवा नव ॥

दैविके पैतृके वापि श्लोकाः श्राव्या द्विजातिभिः।
य इदं शृणुयाद्विप्रः श्रावयेत्पाठयेदपि॥
स प्रध्वस्तसमस्तैना ब्रह्मलोक मवाप्नुयात्।
त्रिभिः श्लोकसहस्रैस्तु त्रिभि र्द्दशतैरपि॥
पाराशरोदितं शास्त्रं सुव्रतः प्रोक्तवान् मुनिः॥

इति श्रीबृहत्पाराशरस्मृतिः सम्पूर्णा।

---

# लघुव्याससंहितायाम् ।



## प्रथमोऽध्यायः ।

ऋषय ऊचुः ।

अहन्यहनि कर्त्तव्यं कमाणां हि कमाद्विधिम् ।
ब्राह्मे मुहूर्त्ते उत्थाय धर्मार्थावनुचिन्तयेत् ॥
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेवच ।
उषः काले तु संप्राप्ते कृत्वाचावश्यकं बुधः ॥
स्नायान्नदीषु शुद्धासु: शौचं कृत्वा यथाविधि ।
प्रातः स्नाने न पूयन्ते येऽपि पापकृतो जनाः ॥
तस्मात्सर्वः प्रयत्नेन प्रातःस्नानं समाचरेत् ।
प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टफलप्रदम् ॥
ऋषीणां कुर्वतां नित्यं प्रातःस्नानं न संशयः ।
मुखे सुप्तस्य सततं लालानित्यं स्रवन्ति हि ॥
ततो नैवाचरेत्कर्माण्यकृत्वा स्नानमादितः ।
अलक्ष्मी कालकर्णीच दुःस्वप्नं दुर्विचिन्तनम् ॥
प्रातःस्नानेन पूयन्ते सर्वेपापान्न संशयः ।
न हि स्नानं विना पुंसां प्राशस्त्यं कर्मसु स्मृतम् ॥
होमे जप्ये विशेषेण तस्मात् स्नानं समाचरेत् ।
अशक्तोऽवशिरस्कं वा स्नानमात्रं विधीयते ॥
आर्द्रेण वाससा चाङ्गमार्जनं कापिलं स्मृतम् ।

अप्राशस्त्ये समुत्पन्ने स्नानमेव समाचरेत् ॥
ब्राह्म्यादीन्यथवाशक्तौ स्नानान्याहुर्मनीषिणः ।
ब्राह्ममाग्नेय मुद्दिष्टं वायव्यं दिव्यमेव च ॥
वारुणं यौगिकं चैव सदा स्नानं प्रकीर्त्तितम् ।
ब्राह्मं तु मार्जनं मन्त्रैः कुशैः सोदकविन्दुभिः॥
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ।
यत्तु सातपवर्षेण तत् स्नानं दिव्यमुच्यते ॥
वारुणञ्चावगाहश्च मानसञ्चात्मवेदनम् ।
यौकिकं स्नानमाख्यातं योगोऽयं विष्णुचिन्तनम् ॥
आत्मतीर्थमिदं ख्यात सेवितं ब्रह्मवादिभिः ।
मनःशुद्धिकरं पुंसां नित्यं तत् स्नानमाचरेत् ॥
शक्तश्चेद्वारुणं विद्वानप्राशस्त्ये तथैवच।
प्रक्षाल्य दन्तकाष्ठञ्च भक्षयित्वा विधानतः ॥
आचम्य प्रयतोनित्यं प्रातःस्नानं समाचरेत् ।
मध्याङ्गुलिसमस्थौल्यं द्वादशाङ्गुलिसम्मितम्॥
सत्वचन्दन्तकाष्ठं स्यात्तस्याग्रेण तु धावयेत्।
क्षीरवृक्षसमुद्भूतं मालिनीसम्भवं शुभम् ॥
अपामार्गञ्च विल्वञ्च करवीरं विशेषतः ।
वर्जयित्वा निषिद्धानि गृहीत्वैकं यथोदितम् ॥
अपहृत्य दिनं पापं भक्षयित्वा विधानवित्।
आचम्य प्रयतोनित्यं स्नानं प्रातः समाचरेत् ॥
नोत्पाटयेद्दन्तकाष्ठमङ्गुल्या धावयेत् क्वचित् ।
प्रक्षाल्य भक्त्या तर्जन्या शुचौ देशे समाहितः ॥
स्नात्वा सन्तर्पयेद्देवान् ऋषीन् पितृगणान् क्रमात् ।

आचम्य मन्त्रवन्नित्यं पुनराचम्य वाग्यतः ॥
मार्जनं वारुणैर्मन्त्रैरात्मानं सकुशोदकैः ।
आपोहिष्ठादिव्याहृतिभिः सावित्र्या वारुणैस्तथा ॥
ओङ्कारव्याहृतियुक्तां गायत्रीं वेदमातरम् ।
जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः ॥
प्राक् तु तेन समासीनो दर्भेषु सुसमाहितः ।
प्राणायामत्रयं कृत्वा ध्यायेत्सन्ध्यामिति श्रुतिः ॥
या सन्ध्या सा जगत्सृष्टिस्थितिसंयमकारिणी ।
ऐश्वरी तु पराशक्तिस्तत्त्व यत्र समुद्भवा ॥
सवितुर्मण्डलगतां गायत्रीं वै जपेद्बुधः ।
प्राङ्मुखः प्रयतोविप्रः सन्ध्योपासन माचरेत् ॥
सन्ध्याहीनोऽशुचिर्नित्य मनर्हः सर्वकर्मसु ।
यदन्यत् कुरुते कर्म न तस्य फलमाप्नुयात् ॥
अनन्यचेतसो शान्ता ब्राह्मणा वेदपारगाः ।
उपास्य विधिवत्सन्ध्यां प्राप्ताः पूर्वे पराङ्गतिम् ॥
योऽन्यतः कुरुते यत्नं धर्मकार्ये द्विजोत्तमः ।
विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ॥
तस्मात्सर्वप्रयत्नेन सन्ध्योपासं समाचरेत् ।
उपासितो भवेत्तेन देवयोगतनुः परः ॥
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
सायत्रीं वै जपेद्विद्वान् ब्राह्मणः प्रयतः स्थितः ॥
इति लघुव्यासस्मृतौ प्रथमोऽध्यायः ।

---

# द्वितीयोऽध्यायः।

अथागम्य गृहं विप्रः समाचम्य यथाविधि।
अग्निं प्रज्वाल्य विधिवत् जुहुयाज्जातवेदसम्॥
ऋत्विक् पुत्रोऽथवा पत्नी शिष्योऽपि च सहोदरः।
प्राप्यानुज्ञां विशेषेण जुहुयाद्वा यथाविधि॥
पवित्रपाणिः शुद्धात्मा शुक्लाम्बरधरोऽपरः।
अनन्यमानसो वह्नौ जुहुयात्संयतेन्द्रियः॥
विना दर्भेण यत्कर्म विना सूत्रेण वा पुनः।
राक्षसं तद्भवेत्सर्वं नेहामुत्र फलप्रदम्॥
दैवतानि नमस्कुर्यादुपहारं निवेदयेत्।
दद्यात्पुष्पादिकं तासां वृद्धांश्चैवाभिवादयेत्॥
गुरुञ्चैवाप्युपासीत हितं तस्य समाचरेत्।
वेदाभ्यासं ततः कुर्यात्प्रयत्नाच्छक्तितो द्विजः॥
वेदमध्यापयेच्छिष्यान् धारयेच्च विपाठयेत्।
अपेक्षेत च शास्त्राणि मन्वादीनि द्विजोत्तमाः!।
वैदिकान्नियमान्वेदान्वेदाङ्गानि च सर्वशः॥
उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये।
साधयेद्विविधानर्थान् कुटुम्बार्थे तथैव च॥
ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत्।
पुष्पाक्षतान्कुशतिलान् गोमयं गन्धमेव च॥
नदीषु देवखातेषु तटाकेषु सरित्सु च।
स्नानं समाचरेन्नित्यं नदीप्रस्रवणेषु च॥
परकीयनिपानेषु न स्नायाद्वै कदाचन।
पञ्च पिण्डान् समुद्धृत्य स्नायाद्वा सम्भवात् पुनः॥

षड्भैकया शिरः क्षाल्य द्वाभ्यां नाभे स्तथोपरि ।
अतश्चतसृभिः कार्यं पादौ षड्भि स्तथैव च ॥
मृत्तिका च समाविष्टा त्वार्द्रामलकमात्रतः ।
गोमयस्य प्रमाणं तत् तेनाङ्गं लेपयेत्ततः ॥
लेपयेद्यतीरस्थस्तल्लिङ्गेनैव मन्त्रतः ।
प्रक्षाल्याचम्य विधिवत् ततः स्नायात्समाहितः ॥
अभिमन्त्य जलैर्मन्त्रैस्तल्लिङ्गैर्वारुणैः शुभैः ।
आपो नारायणोद्भूता स्तानेवास्यायनं पुनः ॥
तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः ।
प्रोक्ष्य सोङ्कारमादित्यं त्रिर्निमज्जेज्जलाशये ॥
आचान्तः पुनराचामेन्मन्त्रेणानेन मन्त्रवित् ।
अन्तश्चरति भूतेषु गुहायां विश्वतोमुखः ॥
त्वं यज्ञस्त्वं वषट्कार आपोज्योतिरसोऽमृतम् ।
द्विपदां वा त्रिरभ्यस्येद्याहृतिं प्रणवादिकाम् ॥
सावित्रीं वा जपेद्विद्वान् स्तथैवाघ्यघमर्षणम् ।
ततः सम्मार्जनं कुर्य्यादापोहिष्ठामयोभुवः ॥
इदमापः प्रवहत व्याहृतिभिस्तथैव च ।
ततोऽभिमन्त्र्य तत्तोर्थमापोहिष्ठादिमन्त्रकैः ॥
अन्तर्गत जलेमग्नो जपेत् त्रिरघमर्षणम् ।
द्विपदां वाथ गायत्रीं तद्विष्णोः परमम्पदम् ॥
आवर्त्तयेद्वा प्रणवं देवं वा संस्मरेद्धरिम् ।
द्विपदोहि परो मन्त्रो यजुर्वेदे प्रतिष्ठितः ॥
अन्तर्जलात्त्रिरावृत्त्या सर्वपापैः प्रमुच्यते ।
आपः पाणौ समादाय जप्त्वा वा मार्जने कृते ॥

विन्यस्य मूर्ध्नि तत्तोयं सर्वपापैः प्रमुच्यते।
यथाश्वमेधः क्रतुराट् सर्वपाप प्रणोदनः॥
तथाघमर्षणं सूक्त सर्वपाप प्रणोदनम्।
अथोपतिष्ठेतादित्य मूर्ध्वं पुष्पाञ्जलान्वितम्॥
प्रक्षिप्य देवमादित्यं ऋग्यजुः सामरूपिणम्।
उदित्यञ्चित्रमित्येतत् तच्चक्षुरितिमन्त्रतः॥
हंसः शुचिषु इत्येतत्सावित्या च विशेषतः।
अन्यैश्च वैदिकैर्मन्त्रैः सर्वपाप प्रणाशनैः॥
सावित्रीं वै जपेत् पश्चाज्जपयज्ञः प्रकीर्तितः।
विविधानि पवित्राणि गुह्यविद्यास्तथैव च॥
तिष्ठन् तदेत्तमाणोऽर्कं जपं कुर्यात्समाहितः।
आसीनः प्राङ्मुखो नित्यं जपं कुर्याद्यथाविधि॥
स्फटिकेन्द्राक्षपद्माद्यैः पत्र दीप कुशत्रकैः।
कर्तव्या त्वक्षमाला स्यात् विशिष्टा चोत्तरोत्तरा॥
जपकाले न भाषेत नाङ्गानि चालयेत्तथा।
न कम्पयेच्छिरोग्रीवां दन्तान्नै न प्रकाशयेत्॥
गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं हि तत्।
एकान्ते तु शुचौ देशे तस्माज्जप्यं समाचरेत्॥
चण्डाला शुद्ध पतितान् दृष्ट्वाचम्य पुनर्जपेत्।
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने॥
सौरान्मन्त्रान्यथोत्साहं पावमानांश्च शक्तितः।
आचम्य च यथाशास्त्रं शक्त्या स्वाध्यायमाचरेत्॥
ततः सन्तर्पयेद्देवान् ऋषीन् पितृगणान् क्रमात्।
आदौ ॐकारमुच्चार्य नाम्नोऽन्ते तर्पयामि च॥

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।
पितॄन् तिलोदकैश्चैव विधिना तर्पयेद्बुधः ॥
अपसव्येन सव्येन पाणिना दक्षिणेन तु ।
देवर्षींस्तर्पयेद्धीमान् उदकाञ्जलिभिः पितॄन् ॥
यज्ञोपवीती देवानां निवीति ऋषितर्पणे ।
प्राचीनावीति पित्र्येषु स्वेन तीर्थेन भाषितम् ॥
निष्पीड्य च तु वस्त्रञ्च समाचम्य यथाविधि ।
यैर्मन्त्रैरर्चयेद्देवान् पुष्पैः पत्रैस्तथाम्बुभिः ॥
ब्रह्माणं शङ्करं सूर्यन्तथैव मधुसूदनम् ।
अन्यांश्चाभिमतान् देवान् पूजयेद्भक्तितो द्विजः ॥
प्रदद्यादाथ पुष्पाणि विन्यसेच्च पृथक् पृथक् ।
न विष्ण्वाराधनात् पुण्यं विद्यते कर्म वैदिकम् ॥
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ।
तद्विष्णोरितिमन्त्रेण सूक्तेनापौरुषेण च ॥
नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ।
निवेदयित्वा चात्मानं विमलन्तत्र तेजसि ॥
तदात्मा तन्मनः शान्तः तद्विष्णोरितिमन्त्रतः ।
अथवा देवमीशानम्भगवन्तं सनातनम् ॥
आराधयेन्महेशानं महादेवं महेश्वरम् ।
मन्त्रेण रुद्रगायत्र्या प्रणवेनाथ वा पुनः ॥
ईशानेनाथ वा रुद्रैस्त्र्यम्बकेन समाहितः ।
पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् ॥
अथोनमः शिवायेति मन्त्रेणानेन वाचयेत् ।
नमस्कुर्यान्महादेवं ऋतं परमेश्वरम् ॥

